## Statement about ownership of CHANDAMAMA (Sanskrit)
## Rule 8 (Form VI), Newspapers (Central) Rules, 1956

| | |
|---|---|
| 1. *Place of Publication* | ...'CHANDAMAMA BUILDINGS'<br>188 N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| 2. *Periodicity of Publication* | ...MONTHLY<br>1st of each calendar month |
| 3. *Printer's Name* | ...B.V. REDDI |
| *Nationality* | ...INDIAN |
| *Address* | ...Prasad Process Private Limited<br>188 N.S.K. Salai, Vadapalani<br>Madras-600 026 |
| 4. *Publisher's Name* | ...B. VISWANATHA REDDI |
| *Nationality* | ...INDIAN |
| *Address* | ...Chandamama Publications<br>188 N.S.K. Salai, Vadapalani<br>Madras-600 026 |
| 5. *Editor's Name* | ...B. NAGI REDDI |
| *Nationality* | ...INDIAN |
| *Address* | ...'Chandamama Buildings'<br>188 N.S.K. Salai, Vadapalani<br>Madras-600 026 |
| 6. *Name & Address of individuals who own the paper* | ...'CHANDAMAMA CHILDREN'S TRUST FUND<br>Beneficieries:<br>1. B.V.L. ARATHI<br>2. B.V. SHARATH<br>3. B.N. RAJESH<br>4. B. ARCHANA<br>5. B.N.V. VISHNU PRASAD<br>6. B.L. ARADHANA<br>7. B. NAGI REDDI (JR) |

All Minors, by Trustee:
M. UTTAMA REDDI, 14 V.O.C. Street, Madras-600 024

I, B. Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

1st March 1985

**B. VISWANATHA REDDI**
*Signature of the Publisher*

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

मान्याः वाचकबान्धवाः,

संस्कृतचन्दमामायाः मम एषः प्रथमः वार्षिकोत्सवः । गतवत्सरे युगादिदिनस्य शुभे सन्दर्भे मम जन्म जातम् । भवतां सर्वेषां प्रेम्णा आदरेण च अहं नितरां सन्तुष्टा अस्मि ।

भवन्तः जानन्ति एव यत् मदीया भाषा सरला इति। पण्डितानां कृते प्रौढशैल्या प्रकाश्यमानाः बह्व्यः पत्रिकाः सन्ति । किन्तु ये संस्कृतं किञ्चिदेव जानन्ति तादृशानां कृते काऽपि पत्रिका नास्ति इति सविषादं वक्तव्यं भवति मया । 'अतः मदीया भाषा सरला भवतु' इत्यत्र विप्रतिपत्तिः एव नास्ति इति मम दृढः विश्वासः ।

अहं सरलतां निराडम्बरतां यथा इच्छामि तथैव इतोऽपि सुन्दरी भवितुम् अपि इच्छामि एव । अस्मिन् विषये भवताम् अभिप्रायः कः ? मम सौन्दर्यवर्धने भवतां संसूचनाः काः ? सरलता-परिरक्षणपूर्वकं मयि किमपि परिवर्तनम् अपेक्षन्ते वा ?

भवत्सु मम सविनयं निवेदनम् अस्ति यत् भवताम् अभिप्रायाः संसूचनाः च निस्सङ्कोचं लेखनीयाः इति ।

मम सीमिते परिधौ भवतां संसूचनाः यावच्छक्यं परिपालयिष्यामि। मदीयां प्रार्थनां सफलीकुर्वन्ति किल भवन्तः ?

इति भवदीया

'संस्कृतचन्दमामा'

सम्पुटः–१ मार्च-८५ सञ्चिका–१२

प्रतिकृतिमूल्यम् रू. २/– वार्षिकं ग्राहकशुल्कम् रू. २४/–












# चन्दमामा

मार्च – १९८५

*

## अन्तरङ्गम्


| | | | | | |
|---|---|---|---|---|---|
| चन्दमामा प्रजल्पति | .... ६ | नगरद्वयम् | .... ४० |
| गृहस्य रक्षणम् | .... ७ | सौजन्यम् | .... ४३ |
| कांस्य-दुर्गम् | .... ११ | बुद्धिमत्ता | .... ४८ |
| चोरः उग्रशीलः | .... १९ | विष्णुकथा | .... ५१ |
| औषधं तायकं च | .... २७ | अन्तिमा इच्छा | .... ५९ |
| दानस्य प्रभावः | .... २९ | धनस्यूतः | .... ६० |
| स्वातन्त्र्य-प्राप्तिः | .... ३५ | महाबुद्धिमान् | .... ६३ |
| प्रामाणिकता | .... ३९ | चित्रशीर्षिका स्पर्धा | .... ६४ |


*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००



# गृहस्य रक्षणम्

राजपुरग्रामे शिवप्रसादः इति कश्चित् गृहस्थः आसीत्। सः ग्राममध्ये सुन्दरं सुदृढं च एकं विशालगृहं निर्माय तस्मिन् वसति स्म। सः कर्मकरैः सह स्वयम् अपि कर्मकरः इव कार्यं कुर्वन्, यौवनसमये बहुपरिश्रमपूर्वकं सम्पादितेन धनेन अतिजागरूकतया गृहनिर्माणं कारितवान्। अतः सः तत् गृहं स्वप्राणवत् भावयन् प्रीत्या तस्य रक्षणं करोति स्म।

एकदा शिवप्रसादस्य पत्नी सुन्दरवल्ली पतिम्- "अस्माकं ग्रामस्थाः केचन परस्परं समालोच्य काशीयात्रार्थं व्यवस्थां कृतवन्तः सन्ति। यात्रासमये अनेकपुण्यक्षेत्राणां दर्शनं भविष्यति। अनेकदेवतानां सेवाभाग्यं लभ्यते। परिचितजनैः सह गमनेन प्रयाणं सुखकरं सन्तोषयुक्तं च भविष्यति। एतादृशः अवकाशः पुनः दुर्लभः एव। अतः आवाम् अपि गच्छावः वा?" इति पृष्टवती।

शिवप्रसादः औदासीन्येन "एतादृशं बृहद्गृहं त्यक्त्वा कीदृशी यात्रा भोः! काशी-यात्रां समाप्य पुनः प्रत्यागमनार्थं न्यूनातिन्यूनं षण्मासाः अपेक्षिताः भवेयुः। तावत्पर्यन्तं गृहस्य रक्षणं कः करोति?" इति उक्तवान्।

पत्युः वचनं श्रुत्वा सुन्दरवल्ली क्रोधेन- "भवतः प्राणाः एव अस्मिन् गृहे प्रतिष्ठापिताः इति भाति। दूरनगरेषु उद्योगान् कुर्वन्तः पुत्राः तत्र तत्रैव स्थिरतया निवसन्ति। तेषां तु अस्य गृहस्य आवश्यकता एव नास्ति। 'अस्माभिः सह एव तिष्ठतु' इति ते पुनः पुनः आग्रहं कुर्वन्ति। 'एतद् गृहं विक्रीय पुत्रैः सह वसावः' इति अहम् अपि पुनः पुनः वदामि। भवान् तु बधिरः इव तिष्ठति। गृहस्य विक्रयणार्थम् एषः युक्तः कालः। गृहरक्षणस्य चिन्ता अपि परिहृता भवति। यात्रार्थं पर्याप्तं धनम् अपि लभ्यते। यात्रातः प्रत्यागमनानन्तरं पुत्रैः सह



निश्चिन्ततया स्थातुम् अपि शक्यते" इति उक्तवती। तदा शिवप्रसादः पत्नीम् उग्रदृष्ट्या पश्यन्–"किं वदति भवती ? मम जीवितकाले गृहस्य विक्रयणं सर्वथा असाध्यम्" इति गर्जितवान्।

तथापि सुन्दरवल्ली सुदृढं प्रतिवादं कुर्वती "अहं कियद्वारं भवन्तं यात्रार्थं याचितवती ? भवान् तु सर्वदा गृहं गृहम् इति जपति। इदानीम् अपि एतादृशयात्रादिकं कृत्वा यत्किञ्चित् पुण्यसम्पादनं न कुर्वः चेत्, किं वृद्धावस्थायां कर्तुं शक्यते वा ? यदि भवान् पृच्छति, तर्हि मम अनुजः आवयोः प्रत्यागमनपर्यन्तं गृहस्य रक्षणं न कुर्यात् वा ? अथवा भवतः भागिनेयः अस्ति खलु ? सः भवतः वचनं तिरस्करोति वा ?" इति पृष्टवती।

शिवप्रसादः पत्नीं नेत्राभ्यम् एव दहन् इव पश्यन् "यदि अवश्यं गृहं त्यक्त्वा गन्तव्यं भवति, तर्हि तालेन कीलयित्वा गच्छामि। किन्तु कदाचित् अपि मम गृहे बन्धूनां पादस्पर्शस्य अपि अवकाशं न दास्यामि" इति उक्त्वा, पुनः किमपि आलोचयन् "अस्तु, भवत्याः इच्छानुसारेण काशीयात्रार्थं गच्छावः" इति उक्त्वा, उत्तरक्षणे एव गृहतः बहिः निर्गतः कुत्रचित् गतवान्।

तदा सुन्दरवल्ली अपारं सन्तोषं प्राप्तवती। शिवप्रसादः गृहतः साक्षात् गच्छन् धनिकस्य वरदराजस्य गृहं प्राप्तवान्। "अहं काशीयात्रार्थं गच्छन् अस्मि। अतः मम गृहं आधिरूपेण गृहीत्वा द्विसहस्ररूप्यकाणि ऋणरूपेण मह्यं ददातु" इति धनिकं शिवप्रसादः पृष्टवान्।

धनिकः वरदराजः मनसि अपारं सन्तोषम् अनुभवन् अपि, मुखे औदासीन्यं प्रकटयन् 'एवम् आधिरूपेण ग्रहणं किमर्थं भोः? व्यर्थः वृद्धिभारः खलु ? गृहस्य विक्रयणम् एव करोतु ! यदि भवान् इच्छति, तर्हि ग्रामस्य ज्येष्ठानां समक्षम् उपविश्य, तैः निर्धारितम् उचितं मूल्यं दास्यामि" इति उक्तवान्।

शिवप्रसादः भ्रुकुटिपूर्वकम् उच्चैः "व्यर्थालापः मास्तु भोः। अहं केवलम् आधिद्वारा ऋणम् इच्छामि। भवान् इच्छति चेत् ददातु। नो चेत् अन्यत्र गच्छामि" इति उक्तवान्।

"यथा भवान् इच्छति तथैव अस्तु। किन्तु एकं विषयं सम्यक् लक्षयतु। काशीयात्रासदृशं दुःसाध्यं कार्यं गृहीतम् अस्ति। तादृशं बृहत्गृहं आधिरूपेण स्थापितं खलु। अतः पञ्चसहस्रं रूप्यकाणि ददामि। केवलं प्रतिशतं द्वादशपरिमितां वृद्धिं ददातु। द्विसहस्रं रूप्यकाणि कथं पर्याप्तानि भवेयुः" इति वरदराजः अवदत्।

'तथा अस्तु' इति अङ्गीकृत्य शिवप्रसादः व्यवहारपत्रे हस्ताङ्कनं कृतवान्।

ततः निर्गत्य शिवप्रसादः स्वीयभागिनेयस्य रङ्गराजस्य गृहं गत्वा "किं भोः रङ्गराज! कुशलं वा? गतसप्ताहे भवान् उक्तवान् आसीत् किल, यत् स्वीयकृषिक्षेत्रस्य पार्श्वस्थानि क्षेत्राणि क्रेतुम् इच्छामि। तदर्थं वरदराजतः ऋणं स्वीकरिष्यामि इति? तत्सर्वं सुकरतया समाप्तं वा?" इति पृष्टवान्।

रङ्गराजः दुःखेन "मातुल, यदि तत्कार्यं तथा सलीलं समाप्तम् स्यात्, तर्हि भवन्तं न वदेयम् वा? तस्मिन् धनिके तावत् औदार्यं कथं स्यात्? सः प्रतिशतं चतुर्विंशतिमितां वृद्धिं पृच्छति। तया एव चिन्तया व्याकुलितः अस्मि" इति उक्तवान्।

"एवं वा? तर्हि एतानि पञ्चसहस्रं रूप्यकाणि स्वीकरोतु। अहं भवतः मातुलानी च काशीयात्रार्थं गच्छावः। मम प्रत्यागमनानन्तरम् एतत् ऋणं प्रतिशतं द्वादशवृद्धिसहितं प्रत्यर्पणीयम्" इति उक्त्वा शिवप्रसादः रङ्गराजाय तत् धनं दत्तवान्। रङ्गराजः बहु सन्तुष्टः।



एतत्सर्वं कृत्वा शिवप्रसादः गृहम् आगतवान्। ततः पत्नीम् आहूय काशीयात्रार्थं सज्जीकरोतु इति सूचितवान्। सा पत्युः मुखं संशयेन पश्यन्ती "किं भोः! यात्रार्थम् आवश्यकं धनं कथं सङ्गृहीतम्? गृहस्य रक्षणार्थं कः नियोजितः?" इति पृष्टवती।

"एकैकः विषयः अपि वक्तव्यः वा? अहं यत् यत् कार्यं करोमि, तत्सर्वं सम्यक् पर्यालोच्य एव करोमि" इति उक्त्वा शिवप्रसादः तत् स्थानं त्यक्त्वा अन्यत्र गतवान्।

अनन्तरं एकसप्ताहानन्तरं तौ दम्पती अन्यैः यात्रिकैः सह काशीं प्रस्थितवन्तौ।

षण्मासाः अतीताः। शिवप्रसादः सुन्दरवल्ली च यात्रां समाप्य प्रत्यागतवन्तौ। सुन्दरवल्ली पत्युः मुखं दृष्ट्वा गृहं प्रदर्शयन्ती "किमिदं चित्रम्? षण्मासेभ्यः एतत् मनुष्य–वासरहितं गृहम् इति उच्यते चेत्, को वा विश्वासं कुर्यात्? गृहं दर्पणसदृशम् अस्ति! कुत्रापि किञ्चिदपि धूलिः वा अवकरः वा नास्ति" इति उक्तवती।

शिवप्रसादः मन्दहासं प्रदर्शयन् "एतत् सर्वं वरदराजस्य अनुग्रहः" इति उक्तवान्।

सुन्दरवल्ली आश्चर्येण "अस्माकं गृहस्य रक्षणं एतावत्या जागरूकतया कर्तुं तस्य कीदृशः उत्साहः स्यात्?" इति पृष्टवती।

"तस्य बलवत् कारणम् अस्ति। इदानीम् आवां वार्धक्यसमीपं आगतवन्तौ। सत्यं खलु? यदाकदाचित् आवां पुत्राणां गृहं गच्छावः इति सः चिन्तयन् अस्ति। अतः एव यदा द्विसहस्रं पृष्टवान् तदा सः पञ्चसहस्रं दत्तवान्। यथाकथञ्चित् आगच्छावः चेत् अपि वृद्धिसहितं तावत् बृहत् ऋणं प्रत्यर्पयितुम् आवाभ्यां न शक्यते इति कल्पयित्वा, सः अस्माकं गृहस्य रक्षणं बहु समीचीनं करोति इति निश्चयं कृत्वा अहं गृहस्य कुञ्चिकां तस्य हस्ते दत्तवान्" इति शिवप्रसादः हसन् उक्तवान्।

"तदस्तु तावत्। इदानीं भवान् तावत् ऋणं कथं प्रत्यर्पयति" इति पृष्टवती सुन्दरवल्ली।

"तेन यत् धनं दत्तं, तत् तथैव अस्ति। परिश्रमेण सम्पादितं सङ्गृहीतं च यत् धनम् आसीत् तदेव काशीयात्रार्थं व्ययीकृतम्। वरदराजेन दत्तं पञ्चसहस्रं मम भागिनेयाय रङ्गराजाय अहं दत्तवान्। सः एव वृद्धिं ददाति। श्वः रङ्गराजसमीपं गत्वा वृद्धि-सहितं पञ्चसहस्रं रूप्यकाणि आनयामि। अनन्तरं तदेव वरदराजाय दत्त्वा मम गृहं वशीकरोमि" इति शिवप्रसादः गर्वेण उक्तवान्।

गृहस्य रक्षणार्थम् एतावत् बृहत् नाटकम् अभिनीतवतः पत्युः चातुर्यं दृष्ट्वा सुन्दरवल्ली सन्तोषेण पतिं बहुधा श्लाघितवती।






२

(माहिष्मतीनगरस्य राजा यशोवर्धनः कुमारयोः अन्यतराय कनिष्ठकुमाराय गुणवर्धनाय सिंहासनाधिकारः दातव्यः इति चिन्तितवान्। वीरपुरस्य माण्डलिकः सूर्यवर्मा अत्र विरोधं प्रकटितवान्। सर्पकेतुनामकः माण्डलिकः गुणवर्धनपक्षपाती सूर्यवर्मणः मारणार्थं योजनां कृतवान्। वीरपुरमार्गे अरण्यप्रदेशे अकस्मात् आक्रमणं कृतवान् च। ततः . . .)

'शत्रोः भयङ्करव्यूहे अहं पतितः अस्मि' इति सूर्यवर्मा तत्क्षणे एव ज्ञातवान्। शत्रुः कः इत्यपि सः ज्ञातवान्। तदा दूरतः "मारयन्तु, निस्सङ्कोचं मारयन्तु। यदि सूर्यवर्मा सजीवः धावति तर्हि भवत्सु एकः अपि न जीवति। जागरूकतया कार्यं कुर्वन्तु" इति वचनानि सूर्यवर्मणा श्रुतानि।

सूर्यवर्मा जन्मतः एव धीरः। आपत्काले तस्य विशेषधैर्यम्। अतः सः मृत्युजिह्वायमानं तीक्ष्णं दीर्घं च स्वखड्गं परितः एकवारं चालितवान्। 'सुयँ सुयँ' इति शब्दः एकवारं प्रतिध्वनितः। अनन्तरं सः एकेन एव प्रहारेण एकस्य सैनिकस्य शिरः अपरस्य हस्तं च छेदितवान्।

तदा किञ्चिद्दूरे विद्यमानाः चत्वारः शत्रु–सैनिकाः आगत्य युगपत् आक्रमणं कृतवन्तः। सर्पकेतुः- "अये ! मारयन्तु नाम। शिरश्छेदः एव भवतां लक्ष्यम्। यः शिरश्छेदं करोति



तस्मै विशेषपुरस्कारः'' इति कर्णकठोरम् आज्ञां कुर्वन् पदे पदे सैनिकान् प्रोत्साहयन् आसीत्।

'इतःपरं मम मरणं निश्चितम् एव' इति सूर्यवर्मा शत्रुसैनिकानां सङ्ख्यां दृष्ट्वा निश्चितवान्। तदा सः इतोऽपि अप्रबुद्धं स्वपुत्रं चन्द्रवर्माणं स्मृतवान्। ''सः इतोऽपि न समर्थः। सर्पकेतुः तम् अपि मारयितुं प्रयत्नं करिष्यति इति तु निश्चितम्। विपत्तिविषये सः मया सूचनीयः। किन्तु कथम्?'' इति चिन्तयन् सः स्वसहचरं स्मृतवान्। 'सुबाहो! अये सुबाहो' इति उच्चैः आह्वयन् सूर्यवर्मा आवेशेन खड्गं चालयन् एकं सैनिकं पातितवान्। तनैव वेगेन अन्यस्य आश्विकस्य शिरः कर्तितवान्। पुनः पृष्ठतः किञ्चित् उत्प्लुत्य पृष्ठतः आगतं शत्रुसैनिकं मारितवान्।

तदा दूरतः प्रत्युत्तरम् आगतम्- ''ओ ओ, प्रभो! अहम् अत्र अस्मि। मम शरीरं यावत् जीवति तावत् भवतः शरीरं न पतति। चिन्ता मास्तु। अहम् आगतः . . .'' इति।

''अये सुबाहो! अत्र मा आगच्छतु। मम चिन्तां त्यजतु। प्रथमं वीरपुरं प्रति धावतु। चन्द्रवर्मा . . .।''

सूर्यवर्मणः वाक्यम् इदानीम् अपि न समाप्तम्। किन्तु, तावति काले शत्रोः खड्गप्रहारेण सः अश्वात् पतितः। शत्रुसैनिकानां तीक्ष्णाः खड्गाः तस्य पृष्ठभागे प्रविष्टानि। ''हा . . .'' इति आर्तनादं कुर्वन् सः भूमौ पतितवान्। पुनरपि तस्य उपरि खड्गप्रहाराः! शत्रुसैनिकानां जयघोषः सर्वत्र व्याप्तः।

''तत्र पश्यन्तु। कश्चित् धावन् अस्ति। सर्वे तत्र धावन्तु। मारयतु तम्। वीरपुरे एषा वार्ता प्रसृता न भवेत्'' इति सर्पकेतुः उच्चैः आज्ञां कृतवान्। केचन आश्विकाः सुबाहोः पृष्ठतः धावितवन्तः।

प्रभोः रक्षणं दुःशकम् इति सुबाहुना यदा ज्ञातं, तदा सः विद्युद्वेगेन पलायितवान्। सूर्यवर्मणः जागरूकतासूचकध्वनिः तस्य कर्णे प्रतिध्वनति स्म। 'कथञ्चित् शीघ्रातिशीघ्रं गत्वा चन्द्रवर्मा विपत्तिविषये सूचनीयः' इति सः दृढसङ्कल्पं कृतवान्। शत्रुजनानां मध्यतः

कथञ्चित् पलायितः सुबाहुः पर्वतम् आरूढ-वान्। उद्देशपूर्वकं मार्गं त्यक्त्वा अरण्ये अग्रे गतवान्। सूर्यवर्मणः मरणेन सः बहुधा खिन्नः। तथापि करणीयस्य महत्वं चिन्तयन् सः धृतिं प्राप्तवान्।



अश्वः वेगेन धावन् आसीत्। वीरपुर-प्राप्त्यर्थं पर्वतोपरि स्थितेन वक्रमार्गेण गन्तव्यम् आसीत्। यद्यपि सः अमार्गे गच्छन् अस्ति तथापि युक्तां दिशम् एव अनुसरन् आसीत्। स च प्रदेशः तावान् सङ्कुचितः आसीत् यत् तत्र द्वाभ्याम् एव परस्पराभिमुखतया गन्तुं शक्यम्।

सुबाहुः पर्वते अश्वम् अग्रे प्रेरयन् पृष्ठतः परिवृत्य दृष्टवान्। तम् अनुधावन्तः आश्विकाः पङ्क्तिक्रमेण सङ्कुचिते मार्गे आगच्छन्तः आसन्। सुबाहुः येन मार्गेण गतः स च मार्गः तैः ज्ञातः आसीत्।

शत्रुसैनिकानां सुबाहोः च मध्ये तावदेव अन्तरं आसीत् यत् शत्रवः बाणप्रयोगेन तं मारयितुं शक्नुयुः। यावच्छक्यम् एतत् अन्तरं वर्धनीयम् इति सुबाहुः आलोचितवान्। कथमपि प्रभोः इच्छां पूरणीया किल?

या भीतिः तेन ऊहिता आसीत् सा उपनता एव। एकः बाणः वेगेन पृष्ठतः आगतः एव। दैवम् अनुकूलकरम्। स च बाणः लक्ष्यच्युतः समीपस्थायां शिलायां लग्नः, तथैव द्विधा छिन्नः च।

सुबाहुः अश्वं पुनरपि सम्प्रेर्य वेगं वर्धित-वान्। बाणप्रयोगः अविरतं प्रचलन् एव आसीत्। कोलाहलः अपि स्पष्टं श्रूयते स्म।

किञ्चित्कालातन्तरं सः पुनः एकवारं परि-वृत्य दृष्टवान्। शत्रुजनानां तस्य च मध्ये अन्तरं तु वर्धितम् आसीत्। किन्तु शत्रवः अनुसृत्य आगच्छन्तः आसन् एव। कष्टकरे अपि मार्गे ते धैर्येण आगच्छन्तः सन्ति। 'इदानीं मया अनिवार्यतया उपायान्तरम् आश्रयणीयम्' इति सुबाहुः चिन्तितवान्।

पर्वतं परितः विद्यमाने तस्मिन् मार्गे सुबाहुः अश्वम् अग्रे प्रेरयन् एव आसीत्। तस्य दक्षिणपार्श्वे भित्तिसदृशः पर्वतभागः।

वामतः च अगाधः पर्वतकन्दरः। यदि अश्वस्य पादः केनापि कारणेन किञ्चित् स्खलति, तर्हि उभयोः अपि पर्वतकन्दरे पतनं निश्चितम् एव। गाढं परिसर्पतः अन्धकारस्य कारणतः मार्गः अपि स्पष्टं न दृश्यते। अश्वानां खुरपुटध्वनिः, पादाघातेन पर्वतकन्दरेषु पततां शिलाखण्डानां ध्वनिः च अविरतं श्रूयमाणः एव अस्ति। "शत्रवः कथञ्चित् मार्गान्तरेण आगत्य मां सम्मुखीकुर्वन्ति चेत् मम एषः समग्रः प्रयासः व्यर्थः एव" इति सुबाहुः चिन्तितवान्।

किञ्चित्काले चन्द्रोदयेन मार्गः पूर्वापेक्षया स्पष्टः अभवत्। मार्गः तु पूर्वापेक्षया वक्रः। सुबाहुः पुनरपि 'शत्रवः कुत्र सन्ति' इति दृष्टवान्। कन्दरस्य अपरपार्श्वे ते आगच्छन्तः तेन दृष्टाः। एषः अपि तेन एव मार्गेण आगतः आसीत्। मध्ये स्थितस्य कन्दरस्य-कारणतः मार्गः सुदूरः जातः आसीत्। किन्तु तिर्यक् दृष्टं चेत् ते पार्श्वे एव सन्ति। 'इदानीं ते बाणप्रयोगेण सुलभतया मां मारयितुं शक्नुवन्ति' इति चिन्तयन् सुबाहुः अश्वात् अवतर्तुम् आरब्धवान्। तदा वेगेन कश्चन बाणः आगतः। एतत् ज्ञात्वा सुबाहुः अवनतः। बाणः आगत्य अश्वस्य पार्श्वे संलग्नः एव।

वेदनया पीडितः अश्वः उच्चैः हेङ्कारं कुर्वन् शिलायां शिरः घट्टयन् पार्श्वे पतितः। तेन सुबाहुः अपि पतितः। अश्वेन सह लुठन् सुबाहुः कन्दराभिमुखं पतितवान्। 'हा प्रभो! मृतः अहम्' इति आक्रोशनं कुर्वन् सुबाहुः



अधः गतः। हन्त ! देवः दयालुः। आधोधः गच्छता सुबाहुना मध्ये एका वृक्षस्य शाखा प्राप्ता।

तां शाखां सः दृढं गृहीतवान्। शाखा अपि दृढा आसीत्। दैवात् सुबाहुः रक्षितः। अश्वः तु लुठन् अधः पतितः। प्रायः अश्वेन कन्दरतलं प्राप्तं स्यात्।

कन्दरस्य अपरपार्श्वे हर्षध्वनिः करतलध्वनिः च श्रुतः। 'अहं मृतः इति शत्रुभिः चिन्तितम् अस्ति' इति सुबाहुः चिन्तितवान्। वस्तुतः शत्रुभिः अपि तथैव चिन्तितम् आसीत्- "अश्वेन सह सुबाहुः अपि कन्दरतलं प्राप्तः" इति। अहं दैवेन एव अनुगृहीतः इति सुबाहुः समाधानं प्राप्तवान्।

सुबाहुः निश्चलः भूत्वा वृक्षस्य शाखाम् अवलम्ब्य तूष्णीं स्थितवान्। यद्यपि सः प्रदेशः अन्धकारमयः आसीत्, तथापि अस्पष्टे चन्द्रप्रकाशे लघुस्पन्दनम् अपि शत्रुसंशयाय भवेत्। संशयः उत्पन्नः चेत् शत्रवः पुनरपि बाणवृष्टिं कुर्वन्ति एव।

सुबाहुः वृक्षाणां मध्यतः पश्यन् शत्रुजनानां चलनवलनं परिशीलयन् आसीत्। ते अश्वात् अवतीर्य कन्दरं परिशीलयन्तः परस्परं किमपि वार्तालापं कुर्वन्तः आसन्। 'मां कदाचित् ते दृष्टवन्तः वा ?' इति भीत्या कम्पमानम् आसीत् सुबाहुहृदयम्। नैव ! ते न दृष्टवन्तः एव। यतः तेषाम् अट्टहासध्वनिः स्पष्टं श्रूयते। "निवारितः मानवपशुः। महान्





पुरस्कारः अस्माकम्। हो! हो!" इति हर्षोद्गारः। अनन्तरं ते सर्वे अश्वम् आरुह्य यथा आगताः तथैव प्रतिनिवृत्ताः। प्रतिनिवर्तनशब्दं श्रुत्वा सुबाहुः दीर्घम् निश्वसितवान्।

सावधानतया सुबाहुः आत्मानं समाश्वसितवान्। पतनकारणतः पादे वेदना अनुभूयते स्म। तथापि तस्य विशेषखेदः नास्ति। शत्रुहस्ततः मुक्तिः प्राप्ता किल! तदेव महत् सौभाग्यम्। इतःपरं केनापि उपायेन सूर्योदयतः पूर्वं वीरपुरं प्राप्य सर्पकेतोः विषये प्रतीकारः साधनीयः अस्ति।

'शत्रवः निश्चयेन दूरं गताः' इति निश्चयः यदा जातः, सुबाहुः क्रमशः बहिः आगतवान्। तस्य वस्त्राणि छिन्नविच्छिन्नानि आसन्। पतनसमये जातैः व्रणैः तस्य शरीरं रक्तसिक्तम् आसीत्। सः तत्रैव प्राप्तानि कानिचन विशिष्टपर्णानि स्वीकृत्य हस्ताभ्यां सम्यक् मर्दितवान्। ततः आगतं रसं व्रणानाम् उपरि लेपितवान्। समीपे एव व्याघ्रगर्जनं श्रुतं तेन।

व्याघ्रगर्जनं श्रुत्वा सुबाहुः भयेन स्तब्धः जातः। अस्मिन् पर्वतप्रदेशे व्याघ्राः, वृकाः, सिंहाः, महाकाराः अजगराः च सन्ति इति सः स्मृतवान्। यदि क्रूरजन्तुभ्यः आत्मा रक्षणीयः तर्हि रक्षणार्थं किमपि आयुधम् अपेक्षितम् आसीत्। पतनसमये खड्गः अपि नष्टः आसीत्। तस्य अन्वेषणं वृथाप्रयासाय एव।

सुबाहुः परितः एकवारम् अवलोकितवान्। अनन्तरम् एकां वृक्षस्य दृढशाखां भञ्जयित्वा पर्णानि निष्कास्य दण्डं सम्पादितवान्। ततः शिलायाः सस्यानां लतानां च आधारेण, दण्डं दृढं भूमौ स्थापयन् च, मन्दम् अग्रे गच्छन् समतलप्रदेशं प्राप्तवान्।

'इतःपरं केन मार्गेण गतं चेत् शीघ्रम् एव वीरपुरं प्राप्तुं शक्यते' इति सुबाहुः सम्यक् जानाति। सः मन्दप्रकाशे जागरूकतया पदं स्थापयन् क्रूरमृगेभ्यः आत्मानं रक्षन् मध्यरात्रसमये पर्वतपार्श्वे स्थितम् एकं ग्रामं प्राप्तवान्।

यदा सः ग्रामसमीपं गतवान्, तदा हस्त-

दीपस्य उज्वलप्रकाशः, तत्रैव परस्परवार्तालापे निमग्नाः केचन पुरुषाः च तेन दृष्टाः ! "मध्यरात्रे ग्रामीणानां ग्रामात् बहिः किं कार्यं स्यात्? एते मार्गलुण्टाकाः न किल?" इति सुबाहुः चिन्तितवान्। तदा समीपतः एव अश्वानां खुरपुटध्वनिः स्पष्टं श्रुतः। वेगेन धावन्तः अश्वारोहिणः ते दीपस्य समीपे विद्यमानानां समीपम् आगत्य "किं भोः? इदानीम् अपि अत्रैव सन्ति? जल्पनेन वृथा कालयापनं कुर्वन्तः सन्ति किल? एतावता एव विलम्बः जातः। अग्रे गच्छन्तु तावत्" इति वदन्तः स्वयं अग्रे प्रस्थिताः।




एतत्सर्वं दृष्ट्वा सुबाहुः आश्चर्यम् अनुभूतवान्। तेनैव सह तस्य मनसि संशयः अपि उत्पन्नः- "दीपधारिणः ते न मार्गलुण्टाकाः। अश्वारोहिणां जनानां वेषेण ज्ञायते यत् ते सैनिकाः इति। एवं तर्हि किम् एते वीरपुरस्य सैनिकाः? दीपसमीपे स्थितैः जनैः कुत्र गन्तव्यम् अस्ति? अश्वारोहिणाम् एतेषां च कः सम्बन्धः?" इति।

'एतेषां सन्देहानां युक्तम् उत्तरं प्राप्तव्यं चेत् दीपसमीपम् एव गन्तव्यम्। वार्तालापेन एव सर्वं सुस्पष्टं ज्ञातुं शक्यते' इति सः चिन्तितवान्।

तस्य मनसि पुनरपि सन्देहः- "यदि ते वीरपरीयाः, तर्हि तेषां सकाशात् अश्वम् एकं स्वीकृत्य शीघ्रम् एव वीरपुरं प्राप्तुं शक्नोमि। किन्तु यदि ते शत्रवः स्युः . . . ?" इति।

सुबाहुः स्ववस्त्राणि परिशीलितवान्। 'छिन्नेन वस्त्रेण आवृतः अहं कः इति कोऽपि ज्ञातुं न शक्नोति। यत्किमपि भवतु नाम। धैर्यं सर्वत्र साधनम्। धैर्यवतः पुरुषस्यविषये एव दैवम् अनुकूलकरं भविष्यति।' इति निश्चित्य सः धैर्यं प्राप्तवान्। अनन्तरं सन्देहान् सर्वान् अविगणय्य दीपप्रकाशस्य समीपं गतवान्।

यावत् सः समीपं गतवान् तदा ते तं दृष्टवन्तः। एतं दृष्ट्वा कश्चित् उक्तवान्- "कश्चित् इतः एव आगच्छन् अस्ति। अये भिक्षुक:! इतःपरं गृहं गृहं गत्वा भिक्षायाचनस्य आवश्यकता एव नास्ति। द्रष्टुं तु स्थूलः भाति।

आगच्छतु तावत्। श्वः प्रातःकालतः पूर्वं वयं वीरपुरं लुण्ठयामः। यदि धैर्यम् अस्ति, आगच्छतु। एकदिनाभ्यन्तरे भवान् अपि लक्षाधीशः भवितुम् अर्हति। किम् आगच्छति? तावत् धैर्यम् अस्ति? मुष्टियुद्धं कर्तुं जानाति किल? यदि न जानाति तर्हि चिन्ता मास्तु। वयं सर्वम् अपि पाठयामः'' इति। वचनभङ्ग्या एव सुबाहुः ज्ञातवान् यत् एते सर्वे पानमत्ताः सन्ति इति।

'एते शत्रुपक्षीयाः' इति ज्ञात्वा सुबाहुः किञ्चित् निराशः। तथापि मनःसमाधानं प्राप्नुवन्- ''एवं वा? भवन्तः वीरपुरस्य उपरि आक्रमणं कुर्वन्ति वा? तर्हि अहम् अपि आगच्छामि। मह्यं धनं किमपि मास्तु। अन्नम् अदृष्ट्वा बहूनि दिनानि अतीतानि। अतः प्रथमं किञ्चित् अन्नं, पातुं जलं च दत्तं चेत् उपकाराय भवेत्। अनन्तरं भवन्तः यत् वदन्ति तत् कर्तुं सिद्धः अस्मि'' इति सः उक्तवान्।

सैनिकः किमपि उत्तरं दातुं सिद्धः। तावति काले केचन अश्वारोहिणः वेगेन तत्र आगतवन्तः। 'सर्पकेतुमहाराजः जयतात्' इति घोषणं कुर्वन्तः अधिकारदर्पेण ते उक्तवन्तः- ''सर्वे सिद्धाः वा? अनन्तरं तत् विस्मृतम्, एतत् विस्मृतम् इति व्याजः न वक्तव्यः। प्रस्थानानन्तरं तु पुनश्चिन्तनं नास्ति एव। भवत्सु कोऽपि वीरपुरीयः नास्ति किल? अन्ते खेदप्रदर्शनेन किमपि प्रयोजनं नास्ति एव'' इति।

तदा सैनिकेषु एकः सुबाहुं प्रदर्शयन् उक्तवान्- ''अस्मासु कोऽपि वीरपुरीयः नास्ति। एषः एकः इदानीम् आगतवान्। एषः कुत्रत्यः इति वयं न जानीमः'' इति।

अश्वारोहिषु एकः अश्वम् प्रेरयन् सुबाहु-समीपम् आगतवान्। अन्ये अश्वारोहिणः अपि तम् अनुसृतवन्तः। स्वकीयम् अश्वं सुबाहु-समीपम् आनीतवन्तः च।

(अनुवर्तते)






# चोरः उग्रशीलः

वृक्षस्य शाखायां लम्बमानः शवान्तर्गतः वेतालः "राजा त्रिविक्रमः पुनः आगच्छति एव। इदानीं तस्मै कीदृशीं नूतनां समस्यां ददामि ? कथं सः व्याकुलितः भवेत् ?" इति चिन्तयन्नेव आसीत्। अत्रान्तरे त्रिविक्रमः पुनः तत्र आगत्य, वृक्षतः शवम् अवतार्य, स्कन्धे संस्थाप्य, श्मशानं प्रति मौनं गन्तुं प्रवृत्तः। तदा यथापूर्वं वेतालः वार्तालापं कुर्वन् "भोः महाराज ! प्रायः मानवः स्वीयजीवने उन्नतिं प्राप्तुं सर्वदा यतमानः एव भवति। यद्यपि भवान् अपि मानवः एव, तथापि इदानीं भवान् केवलं तादृशं मानवसहजं परिश्रमं करोति इति वक्तुं न शक्यते। कदाचित् नृपाणा बुद्धिः वक्रा भवति। तदा ते सम्यक् अनालोच्य कार्याणि कुर्वन्ति। तेन प्रजानां क्लेशः अपि भवेत्। प्रायः भवान् अपि तादृशः एव इति प्रतिभाति। यदि दृष्टान्तम् इच्छति, तर्हि उग्रशीलनामकस्य चोरशिखामणेः कथां वदामि,

## वेतालकथा



शृणोतु। तेन गमनायासः न्यूनः भविष्यति इति कथां वक्तुम् आरब्धवान्-

मणिकर्णिकादेशस्य राजा सत्येन्द्रः। तस्य देशस्य पार्श्वस्थिते अरण्ये एकः चोरसमूहः आसीत्। उग्रशीलः तस्य नायकः। ते चोराः अरण्यस्य शैलेषु गुहासु च गुप्तरूपेण वसन्ति स्म। नगरस्य राजमार्गेषु नागरिकाः इव ते सञ्चरन्ति। मध्ये मध्ये अवकाशं प्राप्य प्रजानां धनधान्यादिकम् अपहरन्ति। तदा तदा अन्यग्रामान् नगराणि अपि गत्वा आक्रमणं कुर्वन्ति। तत्र महतीं सम्पत्तिं प्राप्य, पुनः अरण्यं प्रत्यागत्य रहस्यस्थानानि आश्रयन्ति। आक्रमणसमये ते सर्वे स्वमुखानि वस्त्रैः आच्छादयन्ति। अतः यद्यपि उग्रशीलः तेषां नायकः तथापि तस्य निजरूपं कोऽपि न जानाति। केवलं उग्रशीलः अस्माकं नायकः इति ते जानन्ति स्म।

उग्रशीलस्य पत्नी एका उत्तमा नारी आसीत्। पत्युः चौर्यलुण्ठनादिकं तस्यै न रोचते स्म। तस्मिन् विषये सा महतीं जुगुप्सां प्रकटयन्ती सर्वदा पतिं निन्दति स्म। एतादृशं दुष्टजीवनं मास्तु, चौर्यादिकं परित्यजतु इति बहुवारं सा पतिं जागरयति स्म। किन्तु तस्याः वचनानि श्रुत्वा उग्रशीलः किञ्चित् विहस्य, चोरजीवनं विना मम अन्यथा गतिः एव नास्ति इति वदति स्म। अपरिहार्यः व्याधिः इव तत् दुर्व्यसनं तं बाधते स्म।

एतादृशः उग्रशीलः विवाहानन्तरं पञ्चविंशति वर्षपर्यन्तम् अपुत्रः एव आसीत्। अनन्तरं तस्य पत्नी एकं पुत्रं प्रसूतवती। पुत्रजननानन्तरं सहसा उग्रशीलस्य क्रूरता न्यूना जाता। तस्य हृदये नूतनतया मार्दवस्य वात्सल्यस्य च प्रादुर्भावः अभवत्।

तस्य पञ्चप्राणाः अपि पुत्रे प्रतिष्ठापिताः आसन्।

यदा उग्रशीलः स्वीयसमूहेन सह चौर्यार्थं सुदूरप्रदेशं गच्छति, तदा पुनः पञ्चषदिनानन्तरम् एव प्रत्यागन्तुं शक्नोति स्म। तादृश सन्दर्भेषु सर्वदा उग्रशीलः अन्यमनस्कः एव भवति स्म। पूर्ववत् तस्मिन् क्रौर्यं वा उग्रता वा न आसीत्। लुण्ठनार्थं

प्रविष्टेषु गृहेषु यदि अल्पवयस्कान् बालान् शिशून् वा पश्यति, तर्हि भ्रान्तः इव तत्रैव तूष्णीं तिष्ठति स्म। कदाचित् तान् अङ्के गृहीत्वा लालयते अपि। यदि अपायः आपतति, तर्हि झटिति पलायते। उग्रशीलस्य एषः नूतनव्यवहारः तस्य अनुचरेभ्यः न रोचते स्म।

"एवंरीत्या यदि वयं मोहपाशेषु पतामः, तर्हि अवश्यं यदाकदाचित् सलीलम् अन्यवशीभूताः भविष्यामः। किं भवान् एकः एव पुत्रवान् वा? अस्माकं पुत्राः न सन्ति वा? चोराणाम् अस्माकम् एतादृशः मृदुस्वभावः शत्रुरूपः एव। तत्रापि चोरशिखामणेः भवतः इदम् एकं दुर्लक्षणम् एव" इति तस्य अनुचराः अक्षेपं कुर्वन्ति स्म।

उग्रशीलः अपि स्वीयं मृदुस्वभावं त्यक्तुं प्रयत्नं कृतवान्। किन्तु साफल्यं न प्राप्तवान्। एकदा ते सर्वे अतिदूरस्थितम् अपरिचितं राज्यं प्रति चौर्यार्थं प्रस्थिताः। तत्र प्रभूत–सम्पत्तेः लाभस्य निरीक्षणम् आसीत्। तदर्थं दिनचतुष्टयस्य अश्वप्रयाणस्य आवश्यकता आसीत्। ते रात्रिकाले प्रयाणं कुर्वन्तः, दिवासमये वृक्षसमूहमध्ये गुप्तस्थानेषु विश्रान्तिं प्राप्नुवन्ति स्म।

प्रयाणस्य द्वितीयदिने मध्याह्नसमये, कस्यचित् अश्वत्थवृक्षस्य छायायां सुप्तः उग्रशीलः एकं स्वप्नं दृष्टवान्। स्वप्ने तं ग्रहीतुं राजभटाः तम् अनुसृत्य धावन्तः आगच्छन्ति स्म। तदा उग्रशीलस्य अश्वः एकत्र स्खलित्वा





परिवृत्य मार्गे अपतत्। तेन सह उग्रशीलः अपि पतितवान्। पतितः सः पुनः उत्थाय यथाशक्ति शीघ्रं धावितुं प्रवृत्तः। तदा तम् अनुसरन् आगतः, अश्वस्य उपरि उपविष्टः एकः राजभटः उग्रशीलं लक्षीकृत्य एकं खड्गं क्षिप्तवान्। सः खड्गः उग्रशीलस्य पृष्ठं तीक्ष्णं प्रविष्टः। तेन उग्रशीलस्य महती वेदना सञ्जाता, तथा सः पुनः स्खलित्वा अधः पतितवान्। तस्मिन् एव समये तस्य पुरतः एव तस्य पत्नी, तस्य शिशुः च एकस्मात् शैलात् अधस्थिते प्रपाते पतितवन्तौ।

उग्रशीलः उच्चैः आक्रोशन् उत्थाय उपविष्टवान्। तस्य सर्वाणि अङ्गानि कम्पमानानि आसन्। स्वप्ने अनुभूतः वृत्तान्तः भविष्यत्काले यथार्थतां प्राप्नुयात् इति सः अतीव भीतः अभवत्। चौर्येण जीवन् नरः नूनम् एकस्मिन् दिने पतनं प्राप्स्यति इति ज्येष्ठाः वदन्ति। तथैव भविष्यति चेत् मम पत्न्याः पुत्रस्य च का गतिः ?।

उग्रशीलः एवं पर्यालोच्य, दूरे सुप्तान् स्वीयान् दश अनुचरान् उत्थापितवान् "इतः अग्रे गमनं मास्तु। वयम् इदानीम् एव प्रतिगच्छामः। निमित्तानि समीचीनानि न सन्ति। एषः मम निश्चयः" इति उक्तवान्।

तस्य वचनानि श्रुत्वा अन्ये चोराः आश्चर्यचकिताः अभवन्। "किम् इदम् भोः ? अद्यावधि वयं चौर्यकार्यम् उद्दिश्य प्रस्थिताः कदापि कार्यम् असमाप्य न प्रत्यागतवन्तः। इदानीं किं जातम्? कीदृशम् अशुभं तत्?" इति पृष्टवन्तः चोराः।

"अहं भवतां नायकः। भवन्तः केवलं मम आज्ञापालकाः। प्रतिप्रश्नः मास्तु। अहं आज्ञां करोमि, सर्वे प्रतिनिवृत्य गच्छन्तु" इति उग्रशीलः कोशतः खड्गं निष्कास्य उग्ररीत्या नेत्रे घूर्णयन् गर्जितवान्।

तदा चोराः अनिच्छन्तः अपि, तूष्णीं स्वस्थानं प्रस्थितवन्तः। गृहागतान् शून्यहस्तान् तान् दृष्ट्वा, तेषां पत्नीपुत्राणाम् अपि महत् आश्चर्यम् अभवत्। निराशया ते सर्वे खिन्नाः जाताः।



उग्रशीलः तान् सर्वान् एकत्र समावेश्य "प्रियबान्धवाः, यथा नगरे नागरिकाः सन्ति, तथा वयम् अपि मानवाः एव। एतावत्पर्यन्तम् अज्ञानेन क्रूरमृगाः इव अरण्ये जीवनं यापितवन्तः। अस्माकं पुत्राः अपि वंशक्रमम् अनुसृत्य तथैव जीवन्ति। तथा मास्तु। श्वः प्रातः वयं राजधानीं गच्छामः। तत्र स्वयं राजभटानां वशीभूताः भवामः। एवं स्वेच्छया कृतया शरणागत्या तीक्ष्णदण्डः न भविष्यति। केवलं सामान्यदण्डः भवेत्। तेन अस्माकं पत्नीपुत्रादयः अपि स्वातन्त्र्यं प्राप्य अन्यमानवाः इव सुखेन जीवितुम् अवकाशं प्राप्स्यन्ति। एषः एव उचितः मार्गः" इति उक्तवान्।

तस्य वचनं श्रुत्वा अन्ये चोराः स्वीयं विरोधं प्रकटितवन्तः। एतावत्पर्यन्तं अस्माभिः महान्तः अपराधाः कृताः। तदर्थं महाराजः अस्मान् तीक्ष्णम् एव दण्डयति। अतः वयम् अरण्यं परित्यज्य सर्वथा बहिः न आगच्छामः इति ते सर्वे सदृढं उक्तवन्तः।

"तर्हि तथैव कुर्वन्तु। अहं तु महाराजस्य समीपं गत्वा तं शरणं गमिष्यामि। महाराजः अतीवसज्जनः इति प्रसिद्धः अस्ति। भवन्तः अपि सम्यक् आलोच्य निर्णयं कुर्वन्तु। मम विचारः एव साधुः इति भवताम् अपि प्रतीयते एव" इति उग्रशीलः उक्तवान्।

उग्रशीलस्य मनःपरिवर्तनं दृष्ट्वा तस्य पत्नी अपरिमितं सन्तोषं प्राप्तवती। अस्मान् रक्षतु इति सा इष्टदेवतां प्रार्थितवती।

यदा स्वीयाः अनुचराः स्वकीयं वचनं धिक्कृत्य विरोधिनः जाताः, तदा उग्रशीलस्य महान् क्रोधः जातः। तदेव चिन्तयन् निद्रारहितः सः रात्रौ शयितः असीत्। निद्राराहित्येन खिन्नः सः तृतीययामे वायुसेवनया मनसः किञ्चित्अह्लादं प्राप्तुं बहिः गच्छन् समीपे एव किञ्चित्वार्तालापेशब्दं श्रुतवान्। कुतूहलेन तत्रैव एकस्य वृक्षस्य अधः स्थितवान्। तदा तत्रैव अन्धकारे स्थितयोः तस्य द्वयोः अनुचरयोः वार्तालापं श्रुतवान्।

"एकस्य पुत्रस्य जननानन्तरम् अस्माकं



नायकस्य उग्रशीलस्य मनः सम्पूर्णतया परिवर्तितम् अस्ति । यदा सः स्वयं गत्वा शरणागतः भविष्यति, तदा राजभटाः हिंसामार्गम् अवलम्ब्य तं बहुधा पीडयन्ति । तदा गत्यन्तराभावात् सः अस्माकं सर्वेषां रहस्यं वदति एव । अतः तस्य गमनम् एव निवारणीयम् । अस्माकं योगक्षेमार्थं सः निद्रासमये एव सकुटुम्बः हन्तव्यः'' इति एकः उक्तवान् ।

''अहं तु सिद्धः अस्मि । अन्यान् अपि एतं विषयं वदामः । ते अपि धैर्येण साहाय्यं कुर्वन्ति'' इति द्वितीयः उक्तवान् ।

तयोः सम्भाषणं श्रुत्वा उग्रशीलः स्वस्य पत्नीपुत्रयोः च भविष्यत्विपत्तिं ज्ञातवान् । सः शीघ्रं शीघ्रं धावन् गत्वा पत्नीं पुत्रं च उत्थापितवान् । अनन्तरं ताभ्यां सह अश्वम् आरुह्य, समूहस्य बोधः यथा न भवेत् तथा जागरूकतया राजधानीं प्रति प्रस्थितवान् ।

दिनद्वयानन्तरं राजधानीं प्राप्य, सायङ्कालसमये सः नगरं प्रविष्टवान् । नगरस्य बहिर्भागे एव अश्वम् एकत्र बद्ध्वा, पत्न्या पुत्रेण च सह नगरस्य मार्गे पादाभ्यां चलन् गतवान् ।

तां रात्रिं यापयितुं ते एकां धर्मशालां प्रविष्टवन्तः । मध्यरात्रे उग्रशीलः पत्नीम् एवम् उक्तवान् ।

''प्रातः अहम् इतः गत्वा राजभटानां वशीभूतः भविष्यामि'' इति ।

तस्य वचनं श्रुत्वा तस्य पत्नी भयेन कम्पमाना ''माम् एतं शिशुं च अस्मिन् जनसमूहमध्ये त्यक्त्वा भवान् कारगारं गच्छति चेत् आवयोः का गतिः ? तदपेक्षया आवयोः किञ्चित् विषं दत्वा गच्छतु'' इति उक्तवती ।

इदानीम् उग्रशीलस्य पुरतः पूर्वम् अचिन्तिता नूतना समस्या सञ्जाता । मम समीपे पर्याप्तं धनम् अस्ति । तेन नगरे यत्किञ्चित् वाणिज्यं कुर्वन् सुखेन जीवननिर्वहणं कर्तुं शक्नोमि एव । किन्तु अहं चोरशिखामणिः उग्रशीलः इति विषयः कियत्पर्यन्तं रहस्यरूपेण तिष्ठेत् ? यदाकदाचित् रहस्यस्फोटः नूनं भवेत् एव । तदा महाराजः ततोऽपि अधिकं दण्डं दद्यात् । मदीयैः जनैः एव वा आपत्तिः आपतेत् ।



अतः यदि अहम् इदानीम् एव महाराजस्य समीपं गत्वा सर्वं वृत्तान्तं वदामि, तर्हि दण्डः न्यूनः भवेत्। पत्न्याः पुत्रस्य च राजरक्षणं लभ्येत।

एवं चिन्तयन् उग्रशीलः, परेद्युः मध्यरात्रे ततः बहिः प्रस्थितवान्। उपायेन सः महाराजस्य शय्यागृहं प्रविष्टवान्। किन्तु यदा सः निद्रितस्य महाराजस्य समीपं गतवान्, तदा अकस्मात् तस्य पादस्पर्शेन तत्र स्थिता फलक्षीरादिसहिता एका स्थालिका अधः अपतत्। तेन जातेन महता शब्देन सः स्तम्भितः जातः।

तं शब्दं श्रुत्वा रक्षकभटाः तत्र आगत्य तं परितः स्थित्वा तं गृहीतवन्तः।

अत्रान्तरे महाराजस्य अपि निद्राभङ्गः ज़ातः। सः उत्थाय शय्यायाम् उपविष्टवान्। तत्र उग्रशीलः अहं चौर्यार्थं न आगतवान् इति पुनः पुनः वदति स्म।

"तस्य समीपे यत् किमपि आयुधम् अस्ति वा इति प्रथमं पश्यतु" इति उक्तवान् सत्येन्द्रमहाराजः।

रक्षकभटाः उग्रशीलस्य वस्त्रेषु सम्यक् अन्वेषणं कृतवन्तः। किमपि आयुधं न आसीत्।

"एवं तर्हि तम् अत्र त्यक्त्वा भवन्तः सर्वे बहिः गच्छन्तु" इति महाराजः रक्षकभटान् आज्ञापितवान्। रक्षकभटानां निर्गमनानन्तरं महाराजः उग्रशीलं दृष्ट्वा – "भवान् चौर्यार्थं न आगतवान् इति वदति। तर्हि किमर्थम् अत्र आगतवान् ?" इति पृष्टवान्।

उग्रशीलः अञ्जलिबद्धः भूत्वा मस्तकम् अवनमय्य नमस्कारं कृत्वा स्वीयं सर्वं वृत्तान्तं कथितवान्।

महाराजः सावधानेन तस्य वृत्तान्तं श्रुत्वा सन्तृप्तः भूत्वा स्मयमानः पार्श्वस्थं प्रकोष्ठं गतवान्। ततः एकाम् अल्पां ग्रन्थिम् आनीय "पश्यतु भोः उग्रशील, ग्रन्थौ शतं सुवर्णनाणकानि सन्ति। भवान् आगामिवर्षे पुनः अत्र आगत्य द्विशतं सुवर्णनाणकानि मह्यं ददातु। किन्तु तत् धनं भवता न्यायमार्गेण सम्पादनीयम्। सम्यक् स्मरतु" इति उक्त्वा तां धनग्रन्थिम् उग्रशीलस्य हस्ते दत्तवान्।

अनन्तरं महाराजः भटान् आहूय 'एतं सम्मानपूर्वकं नीत्वा राजमार्गे त्यजन्तु' इति आज्ञापितवान्। भटाः तथैव कृतवन्तः।

वेतालः अत्र कथां समाप्य "भोः महाराज! यदा उग्रशीलः स्वयम् आगत्य वशीभूतः जातः, तदा राजा सत्येन्द्रः तं न दण्डितवान्। प्रत्युत शतं सुवर्णनाणकानि दत्वा प्रेषितवान्। एतेन महाराजस्य सहसा वक्रबुद्धिः सञ्जाता वा इति संशयः भवति। इतः अनन्तरम् अपि उग्रशीलः चौर्यं वा लुण्ठनं वा न करिष्यति इत्यत्र किं प्रमाणम्? महाराजस्य तु रक्षणार्थम् अनेके वीराः रक्षकभटाः सन्ति। किन्तु सामान्यप्रजानां का गतिः? अन्यच्च यथाकथञ्चित् उग्रशीलः परिवर्तितः स्यात्, किन्तु तस्य सहचराः अनेके अरण्ये एव सन्ति किल? एतस्य सर्वस्य पर्यालोचनेन महाराजः सम्यक् अपर्यालोच्य, क्षणिकेन भावावेशेन दोषं कृतवान् इव प्रतिभाति किल? एतेषां संशयानां समाधानं जानन् अपि भवान् न वदति चेत्, भवतः शिरः भग्नं भवति" इति उक्त्वान्।

तदा त्रिविक्रमः उक्तवान्-"सत्येन्द्रराजः उग्रशीलम् अदण्डयित्वा महतीं प्राज्ञतां प्रकटितवान् अस्ति। उग्रशीलः स्वीयान् सहचरान् धिक्कृत्य आत्मनः अपराधानां दण्डं प्राप्तुम् एव नगरम् आगतवान् अस्ति। इतःपरं उग्रशीलः चौर्यकार्यं न करोति इत्यत्र एतत् एव प्रधानं प्रमाणम्। सः स्वीयं सम्पूर्णं वृत्तान्तं महाराजाय कथितवान् अस्ति। तेन महाराजः तस्य अनुचराणां वासस्थानम् अपि जानाति। स्वकीयं नायकं राजा न दण्डितवान् इति यदा ते जानन्ति, तदा ते अपि आगत्य क्षमायाचनां कुर्युः। यदि तथा ते न कुर्वन्ति, तर्हि सैनिकान् प्रेषयित्वा अपेक्षितसमये तान् बद्धुम् अपि सुलभः अवकाशः अस्ति एव। एतत् सर्वं पर्यालोच्य एव सत्येन्द्रः उग्रशीलं स्वतन्त्रं कृतवान्" इति।

एवंरीत्या यदा त्रिविक्रमस्य मौनभङ्गः जातः तदा शवसहितः वेतालः उड्डीय पूर्ववत् वृक्षस्य शाखाम् अवलम्बितवान्।





# औषधं तायकं च

वल्लभपुरे ग्रामे सुधीरः नाम एकः गृहस्थः आसीत्। तस्य पत्नी विशालाक्षी। एकदा सुधीरस्य पञ्चवर्षीयः पुत्रः ज्वरपीडितः अभवत्। ज्वरतापेन बालः बहु कष्टम् अनुभवति स्म।

तस्मिन् ग्रामे उत्तमः वैद्यः न आसीत्। अतः सुधीरः पार्श्वग्रामे स्थितस्य प्रसिद्धवैद्यस्य समीपं गतवान्। बालस्य ज्वरविषये सर्वं निवेदितवान्। वैद्यः सप्ताहपर्यन्तं यावत् आवश्यकं तावत् औषधं दत्त्वा प्रेषितवान्।

एकः सप्ताहः अतीतः। तथापि रोगशान्तेः किमपि लक्षणं न दृष्टम्। एतेन विशालाक्ष्याः मनः प्रक्षुब्धम्। वैद्येन दत्तस्य औषधस्य विषये तस्याः विश्वासः अपगतः।

तस्मिन् एव ग्रामे देव्याः उपासकः वैश्वानरः तायकद्वारा रोगनिवारणे प्रसिद्धः आसीत्। प्रतिशुक्रवासरे पूजानन्तरं दीयमानस्य तायकस्य कृते सुदूरग्रामतः अपि जनाः आगच्छन्ति स्म। अतः 'वैश्वानरतः तायकम् आनयतु' इति विशालाक्षी पतिं सूचितवती।

"तायकधारणं ग्रामीणानां पामराणां कार्यम्। अन्धश्रद्धायाः मूलम् तत्। औषधेन अपि यस्य रोगस्य शान्तिः न जाता स च रोगः किं तायकेन शाम्यति? तायकस्य आनयनं किमपि मास्तु एव। अहम् इदानीं वैद्यस्य समीपम् गत्वा पुनरपि औषधम् आनयामि। चिन्ता मास्तु" इति उक्तवान् सुधीरः।

सुधीरः यदा वैद्यस्य समीपं गतवान् तदा सः गृहे न आसीत्। वैद्यस्य पत्नी ज्वरपीडिता आसीत्। तदर्थं तायकम् आनेतुम् इच्छन् वैद्यः वैश्वानरस्य समीपं गतवान् आसीत्। एतां वार्तां श्रुत्वा सुधीरः आश्चर्यचकितः।

सुधीरः तत्क्षणे एव ग्रामं प्रत्यागतवान्। साक्षात् वैश्वानरस्य गृहं गतवान् च। वैश्वानरस्य गृहस्य पुरतः बहवः जनाः आसन्।

'विवेकः'

तेषु वैद्यः अपि आसीत्। सुधीरः वैद्याय पुत्रस्य परिस्थितिं निवेदितवान्।

बालकस्य आरोग्यविषये पुनरपि कांश्चन प्रश्नान् पृष्ट्वा वैद्यः स्वस्यूततः काश्चन गुलिकाः दत्तवान्। 'औषधसमाप्तेः अनन्तरं पुत्रस्य आरोग्यविषये वार्ता प्रापणीया' इति सूचितवान्।

सुधीरः औषधं स्वीकृत्य वैद्यं पृष्टवान्- "महोदय! एकः सन्देहः। भवान् वैद्यशास्त्रं सम्पूर्णं जानन् अपि किमर्थं पुनः तायकं नेतुम् अत्र आगतवान्?" इति।

तदा वैद्यः हसन् उक्तवान्- "अत्र आश्चर्यस्य विषयः कोऽपि नास्ति। तायके मम विश्वासः अस्ति वा न वा इत्येतत् अन्यत् एव। मम पत्नी अस्वस्था अस्ति। मया दत्तेन औषधेन तस्याः अस्वास्थ्यं न दूरङ्गतम्। तस्याः तु तायके महती श्रद्धा। यद्यपि वैद्यशास्त्रविषये सा विशेषतया न जानाति। तथापि केषाञ्चित् सस्यमूलानां विषये सा जानाति। सामान्यतः कस्य रोगस्य कृते किं मूलं स्वीक्रियते मया इत्यपि सा जानाति। अतः मया दीयमानस्य औषधस्य विषये सा चिन्तयति- 'एतावदेव किल? ज्ञातानि एव एतानि मूलानि' इति। मम औषधानां विषये तस्याः तावती श्रद्धा नास्ति। रोगनिवारणे औषधापेक्षया श्रद्धा एव अधिकं कारणम् इति भवान् जानाति एव। अतः अहं तायकं नेतुम् अत्र आगतवान्" इति।

अनन्तरं सुधीरः वैद्येन दत्तम् औषधं नीत्वा पत्न्याः हस्ते दत्तवान्।

विशालाक्षी तु यदा सुधीरः पार्श्वग्रामं गतवान् आसीत् तदा एव वैश्वानरस्य गृहतः तायकम् आनीय बालस्य कटिसूत्रे बद्धवती आसीत्। एतां वार्तां गोपितवती आसीत् च।

सप्ताहाभ्यन्तरे बालकस्य ज्वरः पूर्णतया दूरङ्गतः। औषधेन एव ज्वरः अपगतः इति सुधीरः चिन्तितवान्। तायकमहिम्ना एवं जातम् इति विशालाक्षी चिन्तितवती।





# दानस्य प्रभावः

ब्रह्मदत्तः काशीराज्यं परिपालयन् आसीत्। तस्मिन् समये बोधिसत्वः कोषाधिकारी आसीत्। सः स्वजीवने अशीतिकोटि-सुवर्ण-मुद्राः सम्पादितवान्। कालक्रमेण तस्य मनसि वैराग्यभावना उत्पन्ना। 'प्रपञ्चस्य मोहः त्यक्तव्यः, माया जेतव्या' इति सः चिन्तितवान्। अतः, सः महाराजं निवेदितवान्- 'एतां समग्रां सम्पत्ति स्वीकरोतु भवान्' इति।

तदा राजा उक्तवान्- 'मम समीपे अपि यथेष्टं सम्पत्तिः अस्ति। मम का न्यूनता? अतः भवान् अन्यप्रकारेण सम्पत्तेः विनियोगं करोतु'' इति।

अनन्तरं कोशाध्यक्षः महाराजस्य अनुमतिं सम्पाद्य नगरे तत्र तत्र धर्मशालाः उद्घाटितवान्। तत्र दरिद्राणां कृते अन्नदानस्य व्यवस्थां कृतवान्। एकैकस्याः धर्मशालायाः दैनिकव्ययः एकलक्षसुवर्णमुद्रात्मकः आसीत्।

धर्मशालाचालनपूर्वकेण धर्माचरणेन एषः कोषाध्यक्षः स्वमरणानन्तरं इन्द्रपदवीं प्राप्तवान्। तदीयः पुत्रः अपि पितुः व्यवहारम् अनुसरन् चन्द्ररूपेण जन्म प्राप्तवान्। तदीयः पुत्रः सूर्यरूपेण जन्म प्राप्तवान्। एतदनन्तरीयः मातलीरूपेण, तदनन्तरीयः पञ्चशिखाग्निरूपेण च जन्म प्राप्तवन्तौ। एवं प्रकारेण ते सर्वे देवत्वं प्राप्तवन्तः।

एते स्वमानवजीवने, यथा धनिकाः तथैव कोमलहृदयिनः दानभावप्रेरिताः च आसन्। तेषां व्यवहारे धननिमित्तकः कोऽपि लोपः न आसीत्। अतः एते देवत्वं प्राप्तवन्तः।

किन्तु तदनन्तरं यः जातः तस्य काले सदाचारः धर्मकार्याणि इत्यादीनि अदृश्यतां गतानि। दानं तु सर्वथा लुप्तम् आसीत्। अत्र कारणं-एषः पुत्रः अशीतिकोटिसुवर्ण-मुद्राणाम् अधिपतिः चेदपि महाकृपणः

''जातककथा''



आसीत्। जनाः एतं 'नश्वरकोशीयः' इति नाम्ना आह्वयन्ति स्म ।

एषः पितुः मरणस्य समनन्तरं यत्र अन्नदानं प्रचलति स्म तत्र सर्वत्र तत् स्थगितवान। धर्मशालाः पिहिताः, अग्निसात्कृताः च । दानधर्मादिषु एतस्य श्रद्धा एव न आसीत्। सः चिन्तयति स्म यत् पूर्वजाः मूर्खाः आसन्, अतः दानधर्मादिकार्यार्थम् अपारं धनव्ययं कृतवन्तः इति । इदानीम् एषः तु दाननामश्रवणेन एव क्रुध्यति।

यदा अन्नशालाः स्थगिताः तदा नगरीयाः दरिद्राः नश्वरकोशीयस्य गृहम् आगत्य प्रार्थितवन्तः- ''महानुभाव ! अन्नशालाः पुनरपि उद्घाटिताः भवन्तु। भवतः नामस्मरणं कुर्वन्तः वयं कथञ्चित् जीवामः'' इति ।

तेषां प्रार्थनां श्रुत्वा अपि नश्वरकोशीयः अविचलः एव आसीत् । सः सेवकानां साहाय्येन तान् दरिद्रान् ततः निवारितवान्।

नश्वरकोशीयः पूर्वजाः इव कोटयधीशः, राजास्थाने कोषाध्यक्षः च आसीत् । सः स्वयम् अपि उदरपूर्णं न खादति। पत्नीपुत्रेभ्यः अपि एतदर्थम् अवकाशं न ददाति । अल्पमूल्यकेन सज्जीकृतम् अन्नं सारेण सह संयोज्य सः खादति स्म। जलमयं किञ्चित् तक्रं पिबति स्म। पुरातने शकटे वृद्धौ वृषभौ संयोज्य गमनागमनं करोति स्म। एवं तदीयजीवने धनव्ययस्य अवसरः एव न आसीत्।

एकदा एषः कृपणाग्रेसरः कोषाध्यक्षः सहायककोशाध्यक्षम् आत्मना सह राजसभाम् नेतुम् इच्छन् तदीयं गृहं गतवान्। तस्मिन् समये सः सहायककोषाध्यक्षः पत्नीपुत्रैः सह उपविश्य पायसम् भुञ्जानः आसीत्। कोषाध्यक्षं दृष्ट्वा सः झटिति उत्थितः। एतम् अपि पायसभोजनार्थम् आहूतवान्।

तदा नश्वरकोशीयः चिन्तितवान्- ''यदि अहम् आतिथ्यम् अङ्गीकृत्य पायसभोजनं करोमि तर्हि पुनः कदाचित् मया अपि सपरिवारस्य एतस्य सत्कारः करणीयः भविष्यति'' इति। अतः सः सहायककोषाध्यक्षस्य निमन्त्रणं तिरस्कुर्वन् उक्तवान् ''मित्र! इदानी मम



बुभुक्षा एव नास्ति। इदमिदानीम् अहं आकण्ठं भुक्त्वा आगतवान्। भवन्तः भोजनं कुर्वन्तु" इति।

किन्तु तत्क्षणात् आरभ्य नश्वरकोशीयस्य मनसि 'पायसभोजनं करणीयम्' इति इच्छा प्रबला जाता। किन्तु मनसि सन्देहः- 'यदि गृहे पायसं सज्जीक्रियेत तर्हि अन्ये गृहसदस्याः अपि तस्य भोजनार्थम् उपस्थिताः भविष्यन्ति किल' इति। अतः सः स्वकीयं विचारं गृहे न प्रकटीकृतवान् एव। सर्वदा एतद्विषये एव चिन्तयन् सः रोगग्रस्तः जातः।

तदा नश्वरकोशीयस्य पत्नी पृष्टवती- "किमिदम्? भवान् अस्वस्थः? औषधं किमपि न स्वीकरोति वा?" इति।

"भवती अस्वस्था स्यात्, न तु अहम्। अहं सर्वथा स्वस्थः" इति उक्तवान् नश्वरकोशीयः।

किन्तु तस्य पत्नी एतावता न तृप्ता। सा बहुविधप्रश्नैः पत्युः मनोभिप्रायं ज्ञातवती। अतः सा उक्तवती- "एतावदेव वा? किं स्यात् इति वयं सर्वे भीताः आस्म। पायस-विषये एतावती चिन्ता किमर्थम्? आवश्यकं चेत् किं भवतः, समग्रकाशीनगरे निवसतां सर्वेषां कृते पायसं कृत्वा परिवेषयिष्यामि। सर्वे पायसभोजनेन तृप्ताः भवन्तु नाम" इति।

"आम् आम्, अहं जानामि- भवत्याः मातृगृहीयाः धनिकाः इति। अतः मातृगृहतः एव धनम् आनीय काशीनगरीयेभ्यः पायसं परिवेषयतु" इति कृपणः सः कोपेन उक्तवान्।

"अथवा अस्माकं मार्गे ये निवसन्ति तेभ्यः वा पायसभोजनं दद्मः" इति उक्तवती पत्नी। तेन अपि नश्वरकोशीयः कुपितः एव। "गृहसदस्यानां कृते वा पायसं सज्जीकरोमि" इति पत्नी उक्तवती। "न, न, वृथाव्ययः तेन" इति उक्तवान् नश्वरकोशीयः।

"भवतः एकस्य कृते एव करोमि। अस्तु किल?" इति पृष्टवती पत्नी।

"वस्तुतः गृहे पायससज्जीकरणम् एव अनुचितम्। अतः भवती पायसार्थम् अपेक्षितान् तण्डुलान्, क्षीरम्, घृतं शर्करां च ददातु।



पात्राणि अपि ददातु । अहं दूरे अरण्ये गत्वा पायसं निर्माय भोजनं करिष्यामि' इति उक्तवान् नश्वरकोशीयः ।

पत्नी सर्वाणि वस्तूनि आनीय पत्युः हस्ते दत्तवती । तानि वस्तूनि स्वीकृत्य सेवकस्य स्कन्धे आरोप्य, नश्वरकोशीयः गुप्तरूपेण गच्छन् अरण्यं प्राप्तवान् । तत्र नद्याः तीरे गुल्मैः आवृते प्रदेशे चुल्लीं सज्जीकृत्य सेवक-द्वारा जलम् आनायितवान् । अनन्तरं सः सेवकं आदिष्टवान्-"भवान् गत्वा मार्गे तिष्ठतु । कश्चित् इतः आगच्छति चेत् झटिति मां सूचयतु । अनिवार्यं चेत् अहम् एव भवन्तम् आह्वयामि । ज्ञातं किल ?" इति ।

एतन्मध्ये इन्द्रः स्वपूर्वजन्मनः वंशे उत्पन्नस्य नश्वरकोशीयस्य विषये सर्वं ज्ञातवान् आसीत् ।

इन्द्रः आलोचितवान्- "इतः पूर्वम् अस्मिन् वंशे जाताः सर्वे दानशीलाः आसन्, पुण्यबलेन देवत्वं प्राप्तवन्तः च । किन्तु एषः नश्वरकोशीयः महाकृपणः सञ्जातः । वंशस्य सदाचारान् सर्वान् परित्यक्तवान् । इदानीं जिह्वाचापल्येन प्रेरितः अरण्यम् आगत्य पायसं सज्जीकुर्वन् अस्ति । यदि अहम् एतं सन्मार्गं न उपदिशामि तर्हि एषः निश्चयेन नरकं गमिष्यति" इति । अतः इन्द्रः सूर्यं चन्द्रं मातुलिं पञ्चशिखाग्निं च आहूय, तेषां पुरतः स्वविचारम् उपस्थापित-वान् । ते इन्द्रस्य अभिप्रायं अङ्गीकृतवन्तः ।

अनन्तरम् इन्द्रः ब्राह्मणवेषं धृत्वा नश्वरकोशीयस्य समीपं गतवान् । पृष्टवान् च "आर्य! काशीगमनार्थं कः मार्गः?" इति ।

"रे, काशीगमनार्थं मार्गं न जानाति किम्? अत्र किमर्थं आगतवान् ? गच्छतु इतः" इति कोपेन उच्चैः उक्तवान् नश्वरकोशीयः ।

"किमर्थं कोपः? ओह्! पायसं सज्जीकुर्वन् अस्ति वा? ब्राह्मणान् भोजयितुम् इच्छति वा?" इति हसन् उक्तवान् इन्द्रः ।

"भोजनं सत्कारः किमपि नास्ति। निर्गच्छतु इतः । अपसरतु । गच्छतु, गच्छतु" इति नश्वरकोशीयः तर्जितवान् ।

"पुत्र ! कुपितः मा भवतु । अहम् अतिथिः अस्मि । भवता यत् पायसं निर्मितं तत्रैव

किञ्चित् मह्यं परिवेषयतु। दानेन पुण्यं सम्पादितं भवति" इति इन्द्रः उक्तवान्।

"अहं भवते किञ्चिदपि न परिवेषयामि। अहम् एव भिक्षायाचनेन एतत् सम्पादितवान्। अत्र भवतः अपि भिक्षा वा? गच्छतु तावत्" इति नश्वरकोशीयः स्पष्टम् उक्तवान्।

"यावत् अस्ति तत्रैव किञ्चित् ददातु। यदि एवं न करोति तर्हि भवान् नरकलोकं प्राप्स्यति। किन्तु दानेन भवान् उत्तमं लोकं प्राप्तुम् अर्हति" इति इन्द्रः उपदेशं कृतवान्। नश्वरकोशीयः अन्ते उक्तवान्- "अस्तु नाम। किञ्चित् पायसं परिवेषयामि" इति।

एतावति काले चन्द्रः अपि ब्राह्मणवेषेण तत्र आगतवान्। सः अपि पायसं याचितवान्। विवशः नश्वरकोशीयः तम् अपि उपवेष्टुं सूचितवान्। एतदनन्तरं क्रमशः सूर्यः मातुलिः पञ्चशिखाग्निः च ब्राह्मणवेषेण आगत्य तत्र उपविष्टवन्तः।

शीघ्रम् एव पायसं सिद्धम्। तदा नश्वरकोशीयः सर्वान् उद्दिश्य उक्तवान्- "पत्राणि आनयन्तु। पायसं परिवेषयामि" इति। ब्राह्मणाः आकाशे हस्तं प्रसार्य चक्राणि इव विशालानि पत्राणि आनीतवन्तः।

"अरे! एतावत् विशालं पत्रम्! अत्र परिवेषयितुं कष्टम्। लघूनि मन्दारपत्राणि आनयन्तु तावत्" इति उक्तवान् नश्वरकोशीयः।

ते मन्दारपत्राणि एव आनीतवन्तः। किन्तु




तानि पत्राणि अपि कदलीपत्राणि इव विशालानि आसन्। नश्वरकोशीयः इदानीं किं वा कर्तुं शक्नोति? सः अन्ते तेषु एव पत्रेषु पायसं परिवेषितवान्। तथापि पात्रे पूर्वं यावत् आसीत् तावदेव अवशिष्टम्।

एतन्मध्ये पञ्चाग्निः शुनकरूपं धृत्वा आगत्य पात्रे मुखं स्थापयितुं प्रयत्नं कृतवान्। तदा नश्वरकोशीयः स्वहस्तेन पात्रम् आच्छाद्य शुनकं निवारितवान्। तथापि शुनकमुखतः लाला तस्य हस्तस्य उपरि पतिता।

तदा सः ब्राह्मणान् उक्तवान्- "हस्तक्षालनार्थं जलम् आनयन्तु कृपया" इति। किन्तु ते उक्तवन्तः- 'वयं जलं न आनयामः' इति।

"मया सज्जीकृतं पायसं भक्षितवन्तः

एवं स्थिते अपि किञ्चिदपि कृतज्ञताभावः नास्ति किल ?'' इति उक्तवान् नश्वरकोशीयः। एतेन तेषाम् उपरि कोऽपि परिणामः न जातः। नश्वरकोशीयः एतेन अतीव कुपितः। तथापि कोपं निगृह्णन् सः ब्राह्मणान् उक्तवान्- ''भवन्तः मम पात्रस्य रक्षणं कुर्वन्तु। अहं हस्तं प्रक्षाल्य आगच्छामि'' इति। अनन्तरं सः यावत् नदीम् अवतीर्णवान् तावति काले शुनकः पायसपात्रे मुखं स्थापितवान् एव।

कुपितः नश्वरकोशीयः एकं दण्डं स्वीकृत्य ताडयितुम् इच्छन् शुनकस्य पृष्ठतः धावितवान्। तदा शुनकः अश्वरूपेण परिवृत्तः, नश्वरकोशीयम् अनुधावितवान्। क्षणे क्षणे रूपं परिवर्तयन् सः कदाचित् अल्पाकारेण कदाचित् बृहदाकारेण च दृश्यते स्म। कदाचित् अश्वः भवति, पुनः कदाचित् व्याघ्रः। इदानीं नश्वरकोशीयः मरणभयेन कम्पते ! सः ब्राह्मणान् प्रार्थितवान्- ''अये महानुभावाः ! एतस्मात् अपायात् मां रक्षन्तु'' इति।

तदा ते सर्वे निजस्वरूपेण प्रत्यक्षाः भूत्वा आकाशे स्थितवन्तः। तदा नश्वरकोशीयः विनयेन ''भवन्तः देवताः,न तु मनुष्याः ! अहं ज्ञातुमिच्छामि यत् भवन्तः के ? किमर्थम् अत्र आगतवन्तः ?'' इति पृष्टवान्।

''वयं भवतः पूर्वजाः पितरः। मनुष्यजन्मनि यत् पुण्यं सम्पादितम् आसीत् तस्य प्रभावेण वयम् इदानीं देवतास्वरूपं प्राप्तवन्तः स्मः। भवान् तु कृपणः सन् वंशाचारान् सर्वान् परित्यज्य नरकं प्राप्तुं प्रवृत्तः आसीत्। अतः वयं भवन्तं मार्गम् उपदेष्टुम् अत्र आगतवन्तः। भवान् इतःपरं स्वगृहं गत्वा पुण्यकार्याणि आचरन् देवत्वं प्राप्नोतु'' इति इन्द्रः उक्तवान्।

इन्द्रस्य वचनं श्रुत्वा नश्वरकोशीयः चिन्तायां निमग्नः। सः पश्चात्तापं अनुभूतवान्। पश्चात्तापेन तदीयं हृदयं परिवर्तितम्। सः गृहम् आगत्य स्वकीयां सम्पत्तिं दरिद्रेभ्यः दत्तवान्। तपः आचरितुम् हिमालयं गतवान् च।





# स्वातन्त्र्यप्राप्तिः

१९३९तमे वत्सरे पाश्चात्यदेशेषु समारब्धं युद्धं क्रमशः पूर्वदेशेषु अपि व्याप्तम् । अजेयत्वेन ख्यातेन इंग्लेड-देशेन बलीयान् जर्मनदेशः सम्मुखीकरणीयः आपतितः । एतेषु दिनेषु युद्धेषु विमानद्वारा अणुस्फोटकानां प्रक्षेपणं विशेषतया प्रचलति स्म येन युद्धानि भीकराणि अभवन् ।

जर्मनशासकः हिट्लर् अश्रुतपूर्वेषु हिंसाकृत्येषु हिंस्रकर्मसु च प्रवृत्तः । रशियादेशस्य या मैत्री आसीत् सा अपि तेन छेदिता । हिट्लरः यूधजनान् विशेषतया पीडितवान् । स्वदेशे आक्रान्तदेशेषु च ये यूधजनाः आसन् तान् सर्वान् निर्दयं मारितवान् ।





एषियाखण्डे स्थितेन जापानदेशेन हिट्लरस्य मैत्री सम्पादिता । जापानचक्रवर्ती हीरोहीटो यद्यपि शान्तिप्रियः, तथापि दुराशया तथा कृतवान् । मुसलोनिशासने स्थितः इटलीदेशः अपि एतयोः साहाय्यम् अकरोत् ।



दुराक्रमणस्य विरुद्धं अमेरिकादिदेशाः ब्रिटन्देशस्य साहाय्यम् आचरितवन्तः। एवम् एतत् युद्धं द्वितीयमहायुद्धम् इति प्रसिद्धम् अभवत्। 'भारताय स्वातन्त्र्यं दत्तं चेत् वयं साहाय्यम् आचरामः' इति गान्धीजी ब्रिटनदेशम् उक्तवान्। किन्तु आंग्लशासनेन किमपि आश्वासनं न दत्तम्। अतः १९४२तमे वत्सरे 'क्विट् इण्डिया' आन्दोलनम् आरब्धम्। आंग्लशासनेन

स्वातन्त्र्ययोद्धारः सर्वे कारागारे स्थापिताः।

तस्मिन् एव समये ब्रिटन् अधीने स्थितयोः मलयसिंगपुरयोः उपरि जापानदेशेन आक्रमणं कृतम्। ब्रिटन् शासनस्य दुर्गम् इव स्थितम् सिंगपुरं पराजितम्। एतेन सर्वे आश्चर्यचकिताः। ब्रिटन्-अमेरिका इत्यादीनां मित्रदेशानां पराजयः आसन्नः इव।





आंग्लसर्वकारेण बन्धितः भारतीयनेता श्री सुभाश्चन्द्रबोस् कारागातः पलाय्य काबुल् प्राप्तवान्। ततः १९४३तमे वत्सरे सिंगपुरं गतवान्। एषः पराजितानां आंग्लसेनायां विद्यमानानां भारतीयसैनिकानां सङ्घटनं कृत्वा आजाद्हिन्द्सैन्यं निर्मितवान्। योग्यं सैनिकशिक्षणं दत्तवान् च। जर्मनी जपान् इत्यादि देशानां साहाय्येन आंग्लेयान् भारततः निष्कासयितुं योजनां कृतवान्।

आजाद्हिन्द्सेना कष्टानि सम्मुखीकुर्वती भारताभिमुखं प्रस्थाय मणिपुरस्य कोहिमापर्यन्तम् आगता। किन्तु अनन्तरम् पर्याप्तशस्त्राणाम् अभावतः सेना अग्रे गन्तुं न शक्ता। जापानदेशः अपि विजयावकाशात् च्युतः। १९४५तमे वत्सरे सुभासः रहस्यात्मकरीत्या अदृश्यतां गतः।





एतत्सन्दर्भे एव मुसलिम्लीग् नायकः मुहम्मद् अली जिन्ना मुसल्मानानां पाकिस्ताननामकः पृथग्भागः अपेक्षितः इति अपेक्षां प्रकटितवान्। एषा अपेक्षा अनुचिता इति बहवः नेतारः तं बोधितवन्तः। तथापि आंग्लेयानां परोक्षप्रोत्साहेन प्रेरितः सः स्वकीयं दुराग्रहं न परित्यक्तवान्।

बहुभ्यः वर्षेभ्यः हिन्दु-मुसल्मानानां मध्ये यः भ्रातृत्वभावः आसीत् स च पाकिस्तानप्रतिपादनेन नष्टः। जनानां मध्ये मतीयः विद्वेषः समुत्पन्नः। मुसल्मानाः स्वाशयं दृढं प्रतिपादयन्तः १६ अगस्ट् १९४६ दिनाङ्के प्रत्यक्षं समरं घोषितवन्तः। दिल्ली-कलकत्तादिषु नगरेषु मारणयज्ञः प्रवृत्तः। एतेन सहस्रशः निरपराधिनः प्राणान् त्यक्तवन्तः।






स्वातन्त्र्यसङ्ग्रामस्य नेता महान् राजनीतिज्ञः च जवाहरलाल् नेहरु १९४६तमे वत्सरे स्थापितस्य सर्वकारस्य नेतृत्वम् निरूढवान् । भारतस्य विभजनं निवारयितुं सः बहुविधप्रयत्नान् कृतवान् । किन्तु मुस्लिमजनैः स्वदुराग्रहः न त्यक्तः । भारतस्य विभजनम् अनिवार्यं जातम् ।

विश्वयुद्धेषु महासेनापतित्वेन कीर्तिं प्राप्तवान् मौण्ट् ब्याटन्, १९४७ तमे वत्सरे भारतस्य गवर्नर् जनरल् जातः । तेन सह चर्चां कृत्वा नेहरु १९४७ वत्सरस्य जून् ३ दिनाङ्के घोषितवान् यत् भारतीय राष्ट्रियकांग्रेस् भारतविभजनम् अङ्गीकरोति इति । तस्मिन् एवं वर्षे अगष्ट् १५ दिनाङ्के भारतं स्वतन्त्रं जातम् ।





विभजनकारणतः देशे साम्प्रदायिककलहः, युद्धम् इत्यादयः बहवः समस्याः समुद्भूताः । एवं समस्यासु विद्यमानासु अपि भारते एकता सहनशीलता च न नष्टा । 'एकता एव राष्ट्रियं बलम्' इति अभिप्रायः सर्वत्र व्याप्तः अस्ति । प्रचीनवैभवं स्मरन्तः भारतवासिनः प्रगतिपथे अग्रे गच्छन्तः सन्ति ।

# प्रामाणिकता

केतकी-कासारः इति ग्रामः । गोपराजः इति कश्चित् ग्रामाधिकारी । अतीव बुद्धिमान् प्रामाणिकः च सः पञ्चिवर्षपर्यन्तम् अधिकारे स्थित्वा ग्रामस्य उन्नतिं साधयन् ख्यातः अभवत् । एतादृशः सहसा दिवङ्गतः।तदा ग्रामस्थाः भूस्वामिनः समीपं गत्वा "भोः स्वामिन्! अस्माकं ग्रामाधिकारिणः गोपराजस्य उत्तराधिकारी नास्ति । अतः इदानीं भवान् कृपया तत्सदृशम् एव प्रामाणिकं चतुरं च अन्विश्य तस्मिन् स्थाने नियोजयतु" इति प्रार्थितवन्तः ।

'तथा अस्तु' इति अङ्गीकृत्य भूस्वामी तान् प्रेषितवान् । अनन्तरं स्वसचिवम् आहूय 'यः कोऽपि मनुष्यः प्रामाणिको वा अप्रामाणिको वा इति ज्ञातुं कः उपायः अस्ति? यदा सः अधिकारं प्राप्नोति, ततः परं एव खलु तस्य स्वभावस्य परिचयः भवेत्? ततः पूर्वं कथम्?" इति तं पृष्टवान् ।

"तत् तु सत्यम् एव" इति उक्त्वा सचिवः केतकीकासरग्रामं परितः एकम् उद्घोषणं कारितवान्-"केतकीकासारे ग्रामाधिकारिणः स्थानं प्राप्तुम् ये अर्हाः सन्ति, ते सन्दर्शनार्थम् आगच्छन्तु । सन्दर्शनतः पूर्वं ते सर्वे कोशाधिकारिणः दर्शनं कृत्वा आगच्छन्तु" इति ।

एकसप्ताहानन्तरं दश अभ्यर्थिनः सन्दर्शनार्थम् आगतवन्तः । ते प्रथमं कोशाधिकारिणः समीपं गतवन्तः । सः तेषु एकैकं स्वप्रकोष्ठं नीत्वा तेन सह वार्तालापं कृतवान् । एवं रीत्या तान् सर्वान् अपि पृथक् पृथक् दृष्ट्वा सर्वे परेद्युः प्रातः दशवादनसमये भूस्वामिनः गृहस्य समीपम् आगच्छन्तु इति सूचितवान् । तदनुसारेण ते सर्वे भूस्वामिनः गृहस्य समीपम् आगतवन्तः । तत्र सचिवः कोशाधिकारी च आगतवन्तौ ।

तेषु अभ्यर्थिषु नागवर्मा अन्यतमः आसीत् । सः एव केतकीकासारस्य ग्रमाधिकारी भवति इति कोशाधिकारिणः सूचनानुसारेण भूस्वामी घोषितवान् । तदा अवशिष्टाः नव जनाः अपि "किं भोः एषः महान् द्रोहः । भवतः एव उद्योगं दास्यामि इति पुनः पुनः उक्त्वा अस्मासु एकैकशः अपि शतदीनारान् एषः कोशाधिकारी गृहीतवान्!" इति उक्तवन्तः ।

तदा सचिवः "कोशाधिकारिद्वारा एषा परीक्षा मया एव आयोजिता आसीत् । अधिकार-प्राप्त्यर्थं भवन्तः उत्कोचं दत्तवन्तः । एवमेव अधिकारप्राप्त्यनन्तरम् अपि भवन्तः उत्कोचं न स्वीकुर्वन्ति इत्यत्र किं प्रमाणम्? परन्तु नागवर्मा एकः एव उत्कोचं दातुं निराकृतवान् । अतः सः अर्हतमः इत्यत्र संशयः नास्ति" इति उक्तवान् ।





# नगरद्वयम्

पुरा एकः महान् समुद्रवणिक् आसीत्। तस्य समीपे वामाङ्कः इति एकः विश्वासार्हः दासः आसीत्। सः वामाङ्कः स्वस्वामिनः वाणिज्यव्यवहारेषु नौकायानेषु च सहायकः आसीत्। तस्य सेवाद्वारा सः वणिक् स्वीय-वाणिज्ये महतीं सम्पत्तिं प्राप्तवान्। तेन सन्तुष्टः सः एकां नौकां वामाङ्काय उपायन-रूपेण दत्त्वा "इतःपरं भवान् स्वतन्त्रः, न मम दासः। भवान् स्वीयं वाणिज्यं करोतु। शुभं भवतु" इति शुभाशयपूर्वकं तं प्रेषितवान्।

किन्तु वामाङ्कस्य दौर्भाग्यम्। 'प्रथमकवले मक्षिकापातः' इतिवत् यदा सः नौकायां पण्य-वस्तूनि सङ्गृह्य वाणिज्यार्थं प्रस्थितवान्, तदा प्रथमप्रयाणे एव समुद्रमध्ये सहसा उत्पन्नेन चण्डमारुतेन तदीया नौका नष्टा। सर्वे नाविकाः मृताः। सर्वाणि पण्यवस्तूनि नष्टानि। केवलं वामाङ्कः यथाकथञ्चित् तरन् कश्चित् तीरप्रदेशं प्राप्तवान्।

सः एकः द्वीपप्रदेशः आसीत्। वामाङ्कः तीरतः द्वीपस्य अन्तर्भागं गच्छन्, एकं बृहत् नगरं प्रविष्टवान्।

नगरस्य मार्गेषु महान् जनसम्मर्दः आसीत्। ते सर्वे वामाङ्कं दृष्ट्वा एव समूहरूपेण आ-गच्छन्तः आसन्। यथा यथा सः गच्छति, तथा तथा ते तस्य समीपं आगच्छन्ति स्म। 'जयतु अस्माकं महाराजः' इति घोषवाक्यं ते सर्वे वदन्ति स्म। वामाङ्कः तु आश्चर्येण 'एते मां दृष्ट्वा अन्यः इति भ्रान्ताः" इति चिन्तितवान्।

अल्पे एव काले तं परितः महान् समूहः सम्मिलितः। अलङ्कृतः एकः गजः तत्र आनीतः।

जनाः वामाङ्कं गजस्य उपरि अलङ्कृतपीठे उपवेशितवन्तः। अनन्तरं राजार्हसत्कारपूर्वकं

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

तं राजभवनं नीतवन्तः। 'किमिदं भोः' इति सः पुनः पुनः पृष्टवान्। किन्तु ते "तत् सर्वम् अनन्तरं वदामः" इति उक्तवन्तः।

राजभवने जनाः तस्य सर्वाणि वस्त्राणि अपनीय एकस्यां पेटिकायां स्थापितवन्तः। ततः स्नानलेपनादिकं भोजनं च कारितवन्तः। भोजनानन्तरं राजोचितैः वस्त्रभूषणैः तम् अलङ्कृतवन्तः।

वामाङ्कः परितः स्थितान् जनान् दृष्ट्वा "भवन्तः किमर्थं मां राजयोग्यभूषणैः अलङ्कृतवन्तः वयं परस्परम् अपरिचिताः। प्रयाणसमये समुद्रमध्ये मम नौकाः नष्टा। दैववशात् अहम् एकाकी जीवन् तीरं प्राप्तवान्। एषा मम परिस्थितिः। उद्देशपूर्वकं अत्र अहं न आगतवान्" इति उक्तवान्।

तदा ते जनाः स्वदेशस्य विचारं सविस्तरं वर्णितवन्तः। द्वाविंशतिवर्षेभ्यः पूर्वं तस्मिन् शासनपरिपाटी न आसीत्। चिरकालतः अराजकता प्रसृता आसीत्। तदा कश्चित् प्रवासी तं द्वीपम् आगतवान्। सः शासनक्रमस्य प्रयोजनं बोधितवान्। एकः राजा राजशासनं करोति चेत्, प्रजानां जीवनक्रमः सुगमः भवति। सर्वरीतिभिः द्वीपस्य अभिवृद्धिः भविष्यति। एतादृशशासनक्रमेण अनेके देशाः अभिवृद्धिपथं नीताः। किन्तु राजा कदाचित् निरङ्कुशः भूत्वा प्रजाः पीडयति अपि। अतः एतद्वारणार्थम् एकवर्षानन्तरं शासकः सः नृपः निष्कासनीयः। नूतनः



राजा भवतु। तादृशः राजा स्वीयः मास्तु। परकीयः राजा भवति चेत्, सः पक्षपातरहितं शासनं कर्तुं शक्नोति इति। एतैः विचारैः अत्र सर्वे जनाः आकृष्टाः। तदारभ्य द्वीपस्थाः जनाः द्वीपम् आगतं परकीयम् एकं महाराजं कुर्वन्ति। सः एकवर्षपर्यन्तं शासनं कर्तुम् अवकाशं प्राप्नोति। वर्षानन्तरं तम् अधिकारच्युतं कृत्वा, जनाः समीपस्थं द्वीपान्तरं नीत्वा परित्यजन्ति।

एवं क्रमेण तस्मिन् द्वीपे एतावत्पर्यन्तं द्वाविंशतिः महाराजाः अभवन्। वामाङ्कः इदानीं त्रयोविंशतितमः राजा।

वामाङ्कः सर्वं श्रुतवान्। सहसा प्राप्तां राजपदवीं प्रति सन्तोषापेक्षया वर्षानन्तरं प्राप्तव्यम् अरण्यवासं प्रति भीतिः एव अधिका अभवत्। अतः सः काञ्चन भटान् गृहीत्वा द्वीपान्तरस्थितं तत् घोरारण्यं गन्तुम् अपेक्षितवान्। तत् अरण्यं जनरहितम् आसीत्। तं द्वीपं गन्तुं नौकाव्यवस्था आसीत्।

वामाङ्कः भटैः सह नौकाद्वारा तत् अरण्यं गतवान्। सप्ताहपर्यन्तं तत्रैव स्थित्वा सम्पूर्णम् अरण्यप्रदेशं परिशीलितवान्। सः प्रदेशः इदानीं मनुष्याणां वासयोग्यः न आसीत्। किन्तु तत्र बहवः फलपुष्पभरिताः वृक्षाः आसन्। भूमिः फलवती कृषियोग्या च आसीत्। तत्र कण्टकगुल्मादिकं नाशयित्वा एकं सुन्दरं नगरं निर्मापयितुं शक्यते इति वामाङ्कः निश्चितवान्।

वामाङ्कस्य प्रयत्नेन एकवर्षावधौ तत् अरण्यं फलपुष्पवटिकासहित-नगररूपेण परिवर्तितम्।

तस्मिन् नगरे सुन्दराणि गृहाणि बृहद्भवनानि च निर्मितानि आसन्। तस्य नगरस्य निर्माणार्थं ये परिश्रमं कृतवन्तः, ते सर्वे तत्रैव स्थातुम् अपेक्षितवन्तः। वर्षानन्तरं वामाङ्कः तत् अरण्यं गतवान्।

एतत्सर्वं दृष्ट्वा पुरातननगरस्य जनाः वामाङ्केन अतीव आकृष्टाः। अतः द्वयोः नगरयोः अपि वामाङ्कः एव शाश्वतः राजा भवतु इति ते सर्वे निर्धारं कृतवन्तः।





# सौजन्यम्

सदानन्दः स्वभावेन सज्जनः बुद्धिमान् च। किन्तु तस्य एकः स्वभावः- सर्वदा अन्येषाम् उपहासकरणम्। सः प्रतिदिनं मित्रैः सह ग्रामात् बहिः गच्छति स्म। तत्र मार्गपार्श्वे उपविश्य मार्गे गच्छतां जनानाम् उपहासं करोति स्म। एतेन बहवः खेदम् अनुभवन्ति स्म। कोपं प्रदर्शयन्ति स्म च। क्रमेण एतस्य स्वभावं जानन्तः जनाः सर्वं सोढ्वा मौनम् आश्रितवन्तः।

मौनस्य आश्रयणे अन्यत् अपि कारणम् आसीत् यत् सदानन्दः ग्रामस्य भूस्वामिनः गृहे उद्योगं प्राप्तवान् आसीत्। तत्र सः आयव्यय-व्यवहारं परिशीलयति स्म।

भूस्वामी सदानन्दस्य कार्यविषये तृप्तः आसीत्। एतं विषयं ग्रामीणाः सर्वे जानन्ति स्म। उद्योगप्राप्तेः अनन्तरं सदानन्दस्य उपहासप्रवृत्तिः प्रवृद्धा।

एकदा सदानन्दः मित्रैः सह ग्रामात् बहिः मार्गस्य पार्श्वे विद्यमानस्य सरोवरस्य तटे उपविष्टः आसीत्। तदा तम् एव ग्रामम् आगच्छन्तं कश्चित् पुरुषं सः दृष्टवान्।

आगन्तुकः सामान्यतः पञ्चाशत्वर्षीयः। तदीयानि वस्त्राणि धूलिमयानि। पादयोः पादरक्षा न आसीत्। सामान्यः जनः इव दृश्यते स्म सः।

सदानन्दः तम् आगन्तुकम् उपहासदृष्ट्या पश्यन् मित्राणि उद्दिश्य उक्तवान्- "पश्यन्तु, कश्चित् भूस्वामिनः बन्धुः आगच्छन् अस्ति। वयं तस्मै मार्गप्रदर्शनं कुर्मः। महात्मनां कष्टं निवारणीयं किल?" इति। आगन्तुकः अपि एतत् श्रुतवान्।

सः सदानन्दस्य समीपम् आगत्य विनयेन पृष्टवान्- "अहं भूस्वामिनः गृहं गच्छन् अस्मि इति भवान् कथं ज्ञातवान्?" इति।



सदानन्दः उच्चैः हसन् उक्तवान्- "ह . . ह . . . । मल्लिकापुष्पाणि इव कोमलानि प्रकाशमानानि च भवदीयानि वस्त्राणि, अमूल्यं पादरक्षायुगळं, भवता यस्मात् शकटात् अवतीर्णं तस्य शकटस्य महायोग्यता, भवतः मुखे विलसन् तेजोराशिः,- इत्येतान् सर्वान् दृष्ट्वा अहं सुलभतया ज्ञातवान् । सर्वं प्रत्यक्षम् अस्ति किल ?" इति ।

"भवतः ऊहा युक्ता । अहं येन शकटेन आगतवान्, मार्गे तस्य चक्रं भग्नम् । अहं शकटात् पतितः । अतः मल्लिकासदृशानि मदीयानि वस्त्राणि धूलिमयानि जातानि । अतः अहं शकटचालकं प्रतिप्रेष्य पादाभ्याम् एव आगतवान् । कण्टकाकीर्णे मार्गे शकटचालकेन गन्तव्यम् आसीत् इति कृत्वा अहं तस्मै मदीयं पादरक्षायुगळं दत्तवान् । अहं चिन्तितवान् आसम् यत् भवन्तः मम मुखलक्षणस्य परिचयं केवलं प्राप्नुवन्ति इति । किन्तु भवद्भिः अन्ये मत्सम्बन्धिविषयाः अपि ज्ञाताः सन्ति" इति उक्तवान् आगन्तुकः ।

"ओह्, एवं वा ? तर्हि अहं भवन्तं भूस्वामिनः गृहं प्रापयामि" इति हासं आत्मनि निरोधयन् एव उक्तवान् सदानन्दः ।

"अस्याम् अवस्थायाम् अहं तेन भूस्वामिना मेलितुं न इच्छामि । अतः भवान् मां प्रथमं तदीयं धर्मशालां प्रापयतु । शकटचालकस्य प्रत्यागमनानन्तरम् अहं भूस्वामिनः गृहं गमिष्यामि" इति शान्तस्वरेण उक्तवान् आगन्तुकः ।

यात्रिकाणां वसतिसौकर्यार्थं भूस्वामी ग्रामे एकां धर्मशालां निर्मितवान् आसीत् । तत्र सर्वविधसौकर्यम् अपि आसीत् । तथापि केवलं निर्धनिकाः तत्र आगत्य निवसन्ति स्म । तत्र ये निवसन्ति तेभ्यः भोजनादीनां कृते शुल्कं न स्वीक्रियते स्म । अतः धनिकाः जनाः चिन्तयन्ति स्म यत् अत्र निवासः नाम अगौरवकरम् इति ।

ये निर्धनिकाः तत्र आगत्य निवसन्ति स्म ते प्रायः अरण्ये चोरैः सर्वं लुण्ठितम् इत्यादिव्याजं वदन्तः आगच्छन्ति स्म । 'धर्मशालायाः गमनं विना तेषाम् अन्यः मार्गः नास्ति' इति भावं ते प्रदर्शयन्ति स्म । अतः सदानन्दः

चिन्तितवान्- 'एषः अपि तादृशेषु कश्चित् स्यात् । एतं परिहासेन पीडयित्वा सन्तोषं प्राप्नोमि' इति । अतः सदानन्दः पृष्टवान् 'भवतः शकटचालकः कदा प्रत्यागच्छेत् ?' इति ।

"अहं निश्चयेन किमपि वक्तुं न शक्नोमि । यतः शकटं समीकृत्य तेन आगन्तव्यं किल ?" इति उक्तवान् आगन्तुकः ।

सदानन्दः पुनः पृष्टवान्- "अस्तु नाम, अहं भवते शकटचालकस्य वेषं ददामि । भवान् तत् धर्तुं शक्नोति वा ?"

एतत् श्रुत्वा तत्र स्थिताः सर्वे उच्चैः हसितवन्तः । तथापि सः शान्तचित्तः सन् एव पृष्टवान्- "तर्हि अहं भवतः गृहम् आगच्छामि । वस्त्राणि ददाति वा ?" इति ।

एतं प्रश्नं श्रुत्वा सदानन्दः चिन्तितवान् यत् एषः कश्चित् अतिदरिद्रः भिक्षुकसदृशः स्यात् इति । अतः सः परिहासपूर्वकं पुनरपि उक्तवान्- "यदि भवान् शकटचालकस्य वेषं धरति तर्हि भूस्वामिनः दर्शनं न लभ्यते किल ?" इति ।

"सः मदीयानि वस्त्राणि न परिगणयति । यतः आवां बाल्यात् आरभ्य आत्मीयौ स्नेहितौ" इति उक्तवान् आगन्तुकः ।

"तर्हि किमर्थं कष्टम् ? एतेन एव वेषेण गन्तुं शक्यते किल ?" इति पृष्टवान् सदानन्दः ।

"शृणोतु मित्र ! सर्वेषु विषयेष्वपि सर्वैः अपि केचन नियमाः पालनीयाः भवन्ति ।





भगवतः मन्दिरं गन्तव्यं चेत् स्नानं करणीयम्, मन्दिरात् बहिः पादरक्षा स्थापनीया च। एवमेव अत्र अपि। भूस्वामी आत्मीयः स्यात् नाम। तथापि धूलिधूसरितेन वेषेण तदीयगृहं प्रति गमनं न उचितम्। अतः मया वस्त्रं परिवर्तनीयम् एव। भवान् यदि धर्मशालायाः मार्गं प्रदर्शयति तर्हि उपकाराय भवेत्" इति उक्तवान् आगन्तुकः।

"धर्मशालायाः सर्वोऽपि व्यवहारः मया एव परिशील्यते। तत्र ये वासं कर्तुम् इच्छन्ति तैः केचन नियमाः पालनीयाः भवन्ति। एतच्च भूस्वामिनः आदेशः" इति उक्तवान् सदानन्दः।

"के ते नियमाः ? वदतु तावत्" इति उक्तवान् आगन्तुकः।

प्रथमं शतं सूर्यनमस्काराः करणीयाः। अनन्तरं गीतद्वयं गातव्यम्। पुनश्च पुरतः दृश्यमानं वृक्षं परितः शतं प्रदक्षिणाः करणीयाः। भवान् एतत्सर्वं कर्तुं शक्नोति वा ?" इति उद्गच्छन्तं हासं निगूहन् सदानन्दः पृष्टवान्।

आगन्तुकः किञ्चित्कालं यावत् आलोचनायां मग्नः आसीत्। अनन्तरं सः पृष्टवान्- "मित्र ! भूस्वामिना वस्तुतः एते नियमाः आदिष्टाः वा, उत परिहासार्थं भवान् एवं वदन् अस्ति वा ?" इति।

"अहं कदापि असत्यं न वदामि...." इति सदानन्दः किमपि वक्तुम् आरब्धवान्। अत्रान्तरे भूस्वामी एव तत्र आगतवान्। आगन्तुकं दृष्ट्वा आश्चर्यं सन्तोषं च प्रकटयन् सः पृष्टवान्- "अये ! भवान् रत्नाकरः किल ?" इति।

'आं, भोः' इति वदन् रत्नाकरः शकटस्य चक्रं मार्गे यत् भग्नं तत्सर्वं निवेदितवान्। पुनः उक्तवान् च- "अहं प्रथमं भवतः धर्मशालायां किञ्चित्कालं स्थित्वा वस्त्रादिकं परिवर्त्य, तदनन्तरं भवतः गृहम् आगच्छामि इति चिन्तितवान् आसम्। अत्रान्तरे भवान् एव आगतवान्" इति।

"आगन्तुकस्य परिचयः भूस्वामिना प्राप्तः। एषः आगन्तुकः भूस्वामिनं 'अये, भोः' इति आत्मीयतया आह्वयति च" इति ज्ञात्वा सदानन्दः भीतः। भयेन तस्य शरीरे कम्पनम् आरब्धम्।

भूस्वामी- "भवान् मम ग्रामम् आगत्य मम गृहात् अन्यत्र धर्मशालायां वासं कर्तुम् अर्हति वा? कीदृशः पुरुषः भवान्?" इति वदन् आत्मना सह रत्नाकरं स्वगृहं नीतवान्। अतः सदानन्दः रत्नाकरं किमपि वक्तुं न शक्तवान्।

भीतः सदानन्दः परेद्युः भूस्वामिनः गृहम् अपि न गतवान्। "मया कृतम् उपहासं प्रायः भूस्वामी ज्ञातवान् स्यात्। सः मां निश्चयेन निन्दति, दण्डयेत् अपि" इति चिन्तितवान् सदानन्दः। अतः अस्वास्थ्यव्याजेन सः गृहे एव स्थितवान्। किन्तु अत्रान्तरे रत्नाकरः तदीयं गृहम् आगतवान्।

रत्नाकरस्य दर्शनेन एव सदानन्दस्य शरीरे कम्पः उत्पन्नः। नेत्राभ्यां अश्रूणि निर्गतानि। सः रुदन् उक्तवान्-"महानुभाव! मां क्षाम्यतु कृपया" इति।

"किमर्थं क्षमा?" इति वदन् किञ्चित् स्थगयित्वा रत्नाकरः पुनः उक्तवान्- "मित्र! सत्यं वदतु, कश्चित् आगत्य धर्मशालायां वासं कर्तुम् इच्छति चेत् भवता ह्यः सूचिताः कठिन-नियमाः पालनीयाः एव वा? धर्मशालां तु वृद्धाः दुर्बलाः स्त्रियः च अपि आगच्छन्ति। भवता उक्तं सत्यम् एव चेत् अहं भूस्वामिनं निवेद्य तान् कठिननियमान् निवारयिष्यामि" इति।

इदानीं सदानन्दस्य मनसि धैर्यम् आगतम्। सः रत्नाकरं पृष्टवान्- "भूस्वामी तु भवतः आत्मीयः। भवान् तस्य मुखात् एव एतेषां नियमानां विषये ज्ञातुं शक्नोति स्म किल? किमर्थं मां पृष्टवान्?" इति।

तदा रत्नाकरः हसन् उक्तवान्-"अहं जानामि स्म यत् भवान् उपहासेन मां पीडितुम् इच्छन् एवम् उक्तवान् स्यात् इति। अहं साक्षात् भूस्वामिनम् एव एतद्विषये पृच्छामि चेत् यदि भवतः वचनम् असत्यं स्यात् सः निश्चयेन कुपितः भवति। कदाचित् सः भवन्तम् उद्योगतः निष्कासयेत्, दण्डयेत्, अपि। अतः अहं तं न पृष्टवान्' इति।

एतेन प्रसङ्गेन सदानन्दे विवेकः उदितः।





# बुद्धिमत्ता

केशवपुरस्य भूस्वामी अश्वारोहणे मृगयायां मल्लविद्यायां च अतीव आसक्तः आसीत्। सः स्वशासनान्तर्गतेषु ग्रामेषु मल्लशालाः व्यायामशालाः च स्थापितवान् आसीत्। किन्तु सामान्यविद्यादानार्थं काऽपि शाला न आसीत्।

कदाचित् एषः पार्श्वग्रामस्य गोपपुरस्य भूस्वामिना मेलितुं गतवान्। अनन्तरं तेन सह बहुषु ग्रामेषु अटितवान्। तेषु ग्रामेषु बालानां विद्याभ्यासार्थं गोपपुरस्य भूस्वामी अनेकाः पाठशालाः व्यवस्थापितवान् आसीत्। एतत्सर्वं दृष्ट्वा केशवपुरस्य भूस्वामी बहु प्रभावितः। स्वग्रामेषु अपि पाठशालाः आरम्भणीयाः इति सः निश्चितवान्।

स्वग्रामम् आगत्य केशवपुरस्य भूस्वामी स्वसहायकं बृहस्पतिं गृहम् आगन्तुं सूचितवान्। अनन्तरम् उक्तवान् च- "अस्माकम् अधीने ये ग्रामाः सन्ति तेषु बालानां विद्याभ्यासार्थं पाठशालानां व्यवस्था करणीया। व्ययविषये चिन्ता मास्तु। भवान् शीघ्रातिशीघ्रं पाठशालाः उद्घाट्य अध्यापकान् नियोजयतु" इति।

बृहस्पतिः अपि भूस्वामी इव मृगयायां मल्लविद्यायां च अत्यासक्तः आसीत्। अतः पाठशालानाम् उद्घाटनविषये तस्य न तथा आसक्तिः। तथापि भूस्वामिनः आदेशः पालनीयः एव किल? अतः सर्वत्र गत्वा पाठशालानाम् आरम्भार्थं व्यवस्थां कृतवान्। किन्तु अध्यापकानां नियुक्तिविषये समस्या आगता। सर्वासां शालानां कृते एकदा एव अध्यापकाः कुतः लभ्येरन्?

बृहस्पतिः एतद्विषये भूस्वामिनं पृष्टवान्। पर्यालोचनानन्तरं सर्वत्र घोषणा कृता यत्- इदानीं व्यायामशालायां ये अध्यापकाः सन्ति ते एव दिने पाठशालायां पाठयेयुः, सायं व्यायामशालायां पाठयेयुः इति।

एवं क्रमेण केशवपुरस्य भूस्वामी स्वाधीन-ग्रामेषु व्यवस्थां कृतवान्। एकवर्षानन्तरं शालानां परिवीक्षणार्थं बृहस्पतिं प्रेषितवान् च।

बृहस्पतिः प्रथमं गालवपल्लीं गतवान्। तत्र पाठशालायाः परिवीक्षणं कृतवान्। पाठशालायाः परिस्थितिः शोचनीया आसीत्। केचन विद्यार्थिनः क्रीडन्ति, केचन कोलाहलं कुर्वन्ति च। केचन निद्रां कुर्वन्ति ! अध्यापकः अपि आसन्दे उपविष्टः निद्रायां मग्नः आसीत्।



बृहस्पतिः शालायाः परिस्थितिं दृष्ट्वा कुपितः। सः साक्षात् गत्वा निद्रामग्नम् एकं बालकम् उत्थाप्य- "अये, निद्रां कर्तुम् अत्र आगतवन्तः वा भवन्तः ?" इति वदन् तं मुष्टि-प्रहारेण सम्यक् ताडितवान्। अनन्तरं पार्श्वे उपविष्टम् अन्यं बालकं पृष्टवान्- "भवतः परीक्षां करोमि इदानीम्। अये, वदतु, महाभारतं रामायणं च कः लिखितवान् ?" इति।

बृहस्पतेः कोपमिश्रितवचनेन भीतः सः बालकः कम्पमानः उक्तवान्- "श्रीमन्! क्षाम्यतु माम्। मया तौ ग्रन्थौ न लिखितौ" इति।

एतेन उत्तरेण बृहस्पतेः कोपः प्रवृद्धः। सः अध्यापकस्य स्कन्धे ताडयन् तम् उत्थापितवान्, पृष्टवान् च- "अये! छात्रान् भवान् किं पाठितवान्? अहम् एकं बालकं पृष्टवान्- रामायणं भारतं कः लिखितवान् इति। सः वदति- मया न लिखितम् इति। किं एतत् ?" इति।

अकस्मात् उपस्थितं बृहस्पतिं दृष्ट्वा अध्यापकस्य निद्रामदः अपगतः। सः करयोजन-पूर्वकं प्रणम्य भयेन भक्त्या च उक्तवान्- "महानुभाव ! क्षाम्यतु भवान्। निद्रामग्नः सः किमपि जल्पितवान् स्यात्। मम तु विश्वासः यत् ग्रन्थद्वयं तेन एव लिखितं स्यात् इति। इतः परम् एवं न लेखनीयम् इति तम् अहं सूचयिष्यामि" इति।

एतेन उत्तरेण बृहस्पतेः कोपः पूर्वापेक्षया अधिकं जातः। सः कोपेन ज्वलन् इव प्रधानाध्यापकस्य प्रकोष्ठं गतवान्। तत्र प्रवृत्तं सर्वम् उक्त्वा पृष्टवान्- "पाठशालायाः शिक्षणम् एतावत् दुर्बलं स्यात् इति मया ऊहितम् अपि

न। भवान् किं वदति एतद्विषये ?'' इति।

प्रधानाध्यापकः भीत्या उक्तवान्- ''श्रीमन्, भवान् अन्यथा न चिन्तयतु। अस्य ग्रामस्य जनाः न तथा बुद्धिमन्तः। भवता यः कठिनः प्रश्नः पृष्टः तस्य उत्तरम् एते मुग्धाः बालाः कथं वदेयुः ? चिन्ता मास्तु। अहं बालान् एतद्विषये सम्यक् बोधयिष्यामि। रामायणं भारतं च भवता वा भूस्वामिना वा लिखितं स्यात् किल ?'' इति।

एतत् उत्तरं श्रुत्वा बृहस्पतिः न ज्ञातवान् यत् प्रतिक्रियारूपेण कोपः प्रदर्शनीयः, उत हासः प्रदर्शनीयः, अथवा रोदनं करणीयम् इति। ''एतादृशशिक्षणेन का प्रगतिः साधयितुं शक्येत ?'' इति चिन्तयन् बृहस्पतिः केशवपुरं प्रत्यागतवान्। प्रवृत्तं सर्वं भूस्वामिने निवेदितवान् च- ''श्रीमन् ! एकवर्षपूर्वं स्थापितानां शालानां परिवीक्षणं कर्तुम् इच्छन् अहं गालवपल्लीं गतवान्। तत्रत्या परिस्थितिः अतीव शोचनीया अस्ति। अध्यापकस्य प्रधानाध्यापकस्य विद्यार्थिनां च बुद्धिस्तरः समानः अस्ति। अहं तत्र गत्वा पृष्टवान् यत् रामायणं महाभारतं च कः लिखितवान् इति। किन्तु एकः अपि रामः रामायणं लिखितवान्, भरतः महाभारतं लिखितवान् इति समीचीनं उत्तरं वक्तुं न शक्तः। कीदृशी दुरवस्था एषा !'' इति।

भूस्वामी सहानुभूतिं प्रदर्शयन् उक्तवान्- ''श्रेष्ठकवीनां रामभरतादीनां विषये अपि ते बालाः न जानन्ति इति तु खेदस्य विषयः। तथापि चिन्ता मास्तु। परीक्षासन्दर्भे साहाय्यार्थं शुनकानां पर्यवेक्षकं भैरवाचार्यं, अश्वरक्षणे दक्षं अश्वपतिं, अन्यं मल्लं च प्रेषयामि। भवता सह आगच्छन्तः एते अपि कुशलतापूर्वकं प्रश्नान् प्रष्टुं शक्नुवन्ति। एतत्कार्यार्थम् इतोऽपि लक्षरूप्यकात्मकं व्ययं कर्तुं मम अनुमतिः अस्ति'' इति।

भूस्वामिनः वचने स्वसम्मतिं सूचयन् बृहस्पतिः सन्तोषपूर्वकं शिरः चालितवान्।






अहिंसाप्रधानस्य प्रशान्तजीवनयुतस्य, कुलवर्गभेदरहितस्य समाजस्य स्थापनायां जनान् प्रबोधयन् बौद्धधर्मः वटवृक्षः इव सर्वत्र प्रसृतः अभवत्।

मानवजगतः उद्धारार्थं भूलोकम् अवतीर्णः करुणामूर्तिः सिद्धार्थः 'तथागतः' इति 'बोधिसत्वः' इति च ख्यातः। भगवद्वतारभूतस्य एतस्य महिमा हिमालयस्य इव वर्धमानः आसीत्। एतेन सह एव जन्मशत्रोः देवदत्तस्य बुद्धविषयिणी ईर्ष्या अपि वर्धते स्म।

वृद्धावस्थायाम् अपि बुद्धः समाजे सर्वत्र भ्रमणं करोति स्म। सः दृष्टवान् यत् दरिद्राः निम्नजातीयाः च सदा पीडयमानाः सन्ति इति। अतः सः तादृशान् उपेक्षितबान्धवान् अपि स्वीयैः उपदेशैः पावयन्, तान् स्वशिष्यगणे योजितवान्। एतत् असहमानः देवदत्तः मनसि प्रतीकारयोजनाम् आरचयन् आसीत्।

ये ये बुद्धविरोधिनः आसन् तान् सर्वान् मेलयन् देवदत्तः तेषां सम्मुखे स्वकुतन्त्रं प्रतिपादयति स्म।

एकदा देवदत्तः चर्चासमये बुद्धं पृष्टवान्- "भवान् अहिंसायाः प्रचारं करोति। एतत् उचितम् एव। एतेन सिद्धान्तेन प्रभाविताः बहवः बौद्धभिक्षवः सञ्जाताः। 'मांसाहारः निषिद्धः' इति एते सर्वे बोधिताः। किन्तु एतद्विषये कठोरः नियमः केनापि न पालितः। किम् एतत् उचितम् ?" इति।

"वत्स, देवदत्त ! 'बौद्धधर्मस्य अनुयायिनः



अहिंसाव्रतं परिपालयेयुः' इति मया निवेदनं तु कृतम् अस्ति। किन्तु केचन दरिद्राः दारिद्र्यकारणतः समये यत् प्राप्तं तत् खादन्तः मांसाहारिणः जाताः। धनिकवर्गेण सुलभतया यथा प्राप्यते तथा बलवर्धकः शाकाहारः निर्धनिकैः जनैः न प्राप्यते। मानवानां सेवाम् एव स्वधर्मं मानयन्तः बौद्धभिक्षवः प्राणधारणार्थं केवलम् आहारं स्वीकुर्वन्ति। तदपि भिक्षा-द्वारा! दानिनः यत् यच्छन्ति तत् स्वी-कुर्वन्ति भिक्षवः। 'भिक्षादातारः सर्वे मांसाहारं परित्यज्य शाकाहारिणः भवेयुः' इति आदेशं कर्तुं मम कः अधिकारः? बौद्धधर्मः जातिं कुलं, वर्णं च न परिगणति। सर्वसमतां प्रति-पादयन्तः बौद्धभिक्षवः, जनेषु यदि मांसाहारिणः शाकाहारिणः इति भेदं गणयन्तः भिक्षायाचनं कुर्वन्ति तर्हि तत् व्यवहारविरुद्धं सिद्धान्तविरुद्धं च भविष्यति। भेदभावना यथा न उत्पद्येत तथा व्यवहर्तव्यम् इत्येव मम सिद्धान्तः। भिक्षासमये यत् उपलभ्यते तत् स्वीकरणीयम्। एतत् भिक्षुजीवने अनिवार्यम्'' इति उक्तवान् बुद्धः।

''भवतः कथनस्य अयम् अभिप्रायः यत् गृहस्थः भिक्षारूपेण यद्यत् ददाति तत्सर्वं भिक्षुणा स्वीकरणीयम् इति किल?'' इति दर्पेण पृष्टवान् देवदत्तः।

बुद्धः मन्दं हसन् उक्तवान्- ''यः येन-प्रकारेण आहारेण स्वजीवनं यापयति सः तदेव भिक्षारूपेण ददाति। जातिकुलादि-भेदम् अगणयन् भिक्षुः तेन दत्तं खादेत् एव। एषः च भिक्षुधर्मः'' इति।

बुद्धस्य एतत् वचनं श्रुत्वा शिरः कम्पयन् देवदत्तः ततः निर्गतः।

देवदत्तः चिन्तितवान्- ''बुद्धस्य अन्त्यं भवेत् एव। अन्यथा सः वार्धक्यं स्वास्थ्यं च अविगणयन् बौद्धधर्मस्य प्रचारं करिष्यति। निम्नजातीयान् ज्ञानिरूपेण परिवर्तयन् तान् सर्वान् बौद्धधर्मावलम्बिनः विधास्यति। निम्न-वर्गीयाः यदि प्रबुद्धाः भविष्यन्ति तर्हि उच्च-वर्गीयाणां विषये ते अनादरं प्रकटयेयुः। अनन्तरम् अस्मादृशानां महत्वं न्यूनीभविष्यति। सेवकवर्गे जनाः एव न भवेयुः कदाचित्।

अतः बुद्धस्य अन्त्यं करणीयम् एव" इति एवं चिन्तयन् सः जीवकसमीपं गतवान्।

जीवकः निम्नकुले उत्पन्नः, बुद्धस्य अनुयायी च। बौद्धधर्मविषये तस्य अचला श्रद्धा। सः बुद्धं 'भगवतः अवतारः' इति मन्यते स्म।

देवदत्तः जीवकं प्रलोभयन्, तं स्वपक्षे आनेतुम् इच्छन् उक्तवान्- "बुद्धः यत् वदति तत् मिथ्या एव। भवतः जातीयान् स्वपक्षे आनेतुम् इच्छन् सः सर्वसमतां प्रतिपादयति। किन्तु वस्तुस्थितिः एवं न। किं ते भवतः इव जीवनं यापयितुं शक्नुवन्ति? भवान् यादृशं खादति तादृशं ते खादन्ति किम्? अहं चिन्तयामि यत् एवं कदापि न कुर्वन्ति ते इति। यदि भवतः विश्वासः नास्ति तर्हि भवान् भोजनार्थं बुद्धं स्वगृहम् आहूय परीक्षतां तावत्" इति। एवं वदन् सः जीवकस्य हृदये विषबीजम् आरोपितवान्। भिक्षार्थं बुद्धं निमन्त्रयितुं जीवकं प्रोत्साहितवान् च।

जीवकः बुद्धसमीपं गत्वा प्रार्थितवान् यत् गृहम् आगत्य आतिथ्यं स्वीकरणीयम् इति। बुद्धः तत्क्षणे एव एतत् अङ्गीकृत्य जीवकेन सह प्रस्थितः एव। देवदत्तः गुप्तरूपेण एतत्सर्वं पश्यन् आसीत्।

यद्यपि जीवकः बुद्धं स्वगृहम् आनीतवान्, किन्तु भिक्षां दातुं सङ्कोचम् अनुभूतवान्। 'मया यत् क्रियते तत् अनुचितम्' इति



भावना तस्य मनसि उत्पन्ना। तदा बुद्धः उक्तवान्- "जीवक! मदर्थं विशेषरूपेण किमपि न सज्जीकृतम् इति सङ्कोचः मास्तु। भवान् यादृशं खादति तादृशम् एव मह्यम् अपि किञ्चित् ददातु। अद्य अहं भवतः भिक्षां विश्वस्य आगतवान् अस्मि" इति।

जीवकः कम्पमानेन हस्तेन भिक्षां दत्तवान्। बुद्धः सन्तोषपूर्वकं तत् खादितवान्।

वस्तुतः बुद्धः इतः पूर्वम् एव अस्वस्थः आसीत्। वार्धक्यकारणतः तदीया जीर्णशक्तिः कुण्ठिता आसीत्। जीवकः बुद्धाय यत् मांसाहारं दत्तवान् तत् न तथा उत्तमम् आसीत्।



एतदनन्तरं बुद्धः जीवकम् आशिषा अनुगृह्य ततः निर्गतः। किन्तु जीवकस्य मनसि पापभीतिः अधिका जाता। अपराधिभावनया तस्य मुखं म्लानम् आसीत्। द्वारेण अन्तरितः देवदत्तः बुद्धस्य उत्तमं व्यवहारं दृष्ट्वा आश्चर्यचकितः। तथैव आत्मनः द्रोहपूर्णस्य व्यवहारस्य विषये पश्चात्तापम् अनुभूतवान् च।

जीवकेन दत्तस्य आहारस्य स्वीकरणेन बुद्धस्य उदरम् अस्वस्थं जातम्। सः ज्वरतापेन उदरवेदनया च पीड्यमानः शय्याम् आश्रितवान्। दिने दिने तस्य अस्वास्थ्यम प्रवृद्धम्। तदीयः अन्तिमकालः सन्निहितः।

बुद्धस्य शय्यायाः चतुर्षु पार्श्वेषु तदीयाः प्रमुखशिष्याः शिरः अवनमय्य मौनेन उपविष्टाः आसन्। समग्रः परिसरः शान्तः गम्भीरः च आसीत्। तस्मिन् समये अपराधिभावेन जर्झरितः देवदत्तः जीवकेन सह तत्र आगतवान्। उभयोः अपि मुखयोः पश्चात्तापः स्पष्टं दृश्यते स्म। भयविह्वला तयोः चञ्चला दृष्टिः कथयति स्म यत् "भगवन्! क्षमायाचनार्थम् आवाम् आगतवन्तौ। पश्चात्तापेन दग्धौ आवां क्षाम्यतु भवान्" इति।

बुद्धः तयोः आगमनं ज्ञातवान्। सः सावधानतया नेत्रे उन्मील्य तौ प्रेमपूर्वकं समीपम् आहूय उक्तवान्- "भवता जीवकेन च चिन्ता न करणीया। सर्वेषाम् अपि मरणं निश्चितम् एव। भवन्तौ मम निर्वाणे सहायकौ। अतः अहं भवतोः विषये कृतज्ञः अस्मि। निर्वाणः बाह्यचक्षुषोः अतीतः कश्चन प्रकाशः। अहम् अपि तं प्रकाशं प्रति गच्छन् अस्मि। अतः अल्पः अपि खेदः न प्रदर्शनीयः" इति।

बुद्धस्य वचनेन देवदत्तस्य मनसि अद्भुतं परिवर्तननं जातम्। सः बुद्धस्य पादस्पर्शं कर्तुम् अपेक्षां प्रकटितवान्। बुद्धः तं समीपम् आहूय तस्य स्कन्धे हस्तं संस्थाप्य उक्तवान्- "वत्स! यः मानवकल्याणार्थं स्वबुद्धेः उपयोगं करोति सः एव बुद्धः। तस्य बुद्धस्य मृत्युभयं नास्ति। भवान् ज्ञातिवैरेण प्रेरितः व्यक्तिगत-



रूपेण द्वेषं साधितवान्, न तु धर्मस्य विरुद्धम्। धर्मस्य विरुद्धं द्वेषः अपि अशक्यः। अहम् इदानीं गच्छन् अस्मि। एतत्क्षणे एव द्वेषस्य अपि अन्तः भवतु। मत्स्थाने भवान् अस्ति इत्येव चिन्तयतु। सहोदराः आनन्दनन्दादयः राजभोगं परित्यज्य बौद्धभिक्षवः सञ्जाताः सन्ति। मानवकल्याणार्थं स्वजीवनं समर्पितवन्तः सन्ति। भवान् अपि एतेषाम् अनुसरणं करोतु। भिक्षुजीवनम् आश्रित्य सर्वत्र बौद्ध-धर्मस्य प्रसारं करोतु। बौद्धसङ्घान् चालयतु। बौद्धभिक्षूः सन्मार्गे नयतु। एतदर्थं भवान् समर्थः अस्ति'' इति। एवम् उक्त्वा बुद्धः देवदत्तस्य शिरसि हस्तं स्थापयित्वा हृत्पूर्वकम् आशीर्वादं कृतवान्।

देवदत्तः आनन्देन पुलकितः नेत्रे निमील्य 'बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि, सङ्घं शरणं गच्छामि' इति त्रिवारम् जप्त्वा उक्त-वान्- ''हे बुद्धभगवन्! मानवं देवतारूपेण परिवर्तयितुं मार्गम् उपदिशन् भवान् श्रेष्ठतमं धर्मं प्रतिपादितवान्। भवान् साक्षात् भगवान् एव'' इति। अनन्तरं सः हस्तौ योजयित्वा बुद्धं नमस्कृतवान्।

तद्दिनं वैशाखपूर्णिमा। पूर्णचन्द्रः आकाशे विराजमानः आसीत्। पूर्वदिशायाम् उदितं ज्ञानज्योतिः इति ख्यातः बुद्धः निर्वाणं प्राप्त-वान्। पूर्णः चन्द्रः गगनतले अधिककान्त्या शोभितः परिशुद्धां कौमुदीं प्रसारयन् आसीत्।

बुद्धस्य निर्वाणानन्तरं तेन प्रतिपादितं तत्त्वम् उपदेशः सूत्राणि च बौद्धधर्मस्य मूलाधाराः जाताः। जनाः बुद्धं भगवतः रूपेण अवतारिपुरुषरूपेण च पूजयन्ति स्म।

महर्षिः सूतः एवं बुद्धावतारस्य कथां समापितवान्। अन्तिमस्य दशमस्य च कल्क्यव-तारस्य विषये वक्तुम् आरब्धवान् च।

कृत-त्रेता-द्वापर-कलियुगानां सङ्गमः एव महायुगम् इति कथ्यते। महायुगस्य अन्ते कलियुगे अन्तिमचरणे कलेः प्रभावः अत्यधिकं भविष्यति। तदा समग्रः विश्वः सङ्कटग्रस्तः भविष्यति।

अस्मिन् युगे एकत्र 'देवः सर्वथा नास्ति' इति वादः श्रूयते। अपरत्र ''मानवः किं

जीवति उत न'' इति सन्देहः उत्पद्यते तादृशः विचित्रः कालः सः ।

तस्मिन् काले एकता सर्वथा लुप्ता भविष्यति वर्गभेदः जातिकलहः अत्याचारः दुर्व्यापारः परस्परविद्वेषः हिंसा दुर्गुणः इत्यादयः पराकाष्ठां प्राप्स्यन्ति । सज्जनानां जीवनं कष्टकरं भविष्यति ।

शासकानां व्यवहारः तावान् नीचः भविष्यति यत् जनाः राक्षसाः एव वरम् इति चिन्तयन्ति । परस्परलुण्ठनम् एव जीवनम् इति मन्यमानाः जनाः पशूनाम् अपेक्षया नीचतमं व्यवहारं करिष्यन्ति । जातिभेदं प्रोत्साहयन्तः एते पिशाचाः भविष्यन्ति ।

मेधाविनः जगतः नाशने स्वबुद्धित्तायाः उपयोगं करिष्यति । कोटिशः जनान् मारयितुं समर्थानि शस्त्रास्त्राणि निर्मितानि भविष्यन्ति । प्राकृतिकधर्मः अस्तव्यस्तं भविष्यति । ग्रहाणां गतिः वक्रा भविष्यति । सर्वंसहा अपि पृथ्वी विलपिष्यति ।

एतस्मिन् सन्दर्भे विष्णुः चिन्तयिष्यति यत् दुष्टशिक्षणपूर्वकं शिष्टरक्षणे दण्डोपायं विना अन्यः मार्गः नास्ति इति । अतः सः कल्किरूपेण भूलोकम् अवतरिष्यति । एषः एव दशमः अवतारः ।

शिवः स्वांशेन निर्मितम् एकम् अश्वं कल्केः सहायकत्वेन प्रदास्यति । स च महाश्वः कालगतेः



अपि अधिकवेगेन गच्छन्, निरन्तरं श्वेतधूमं निश्वासरूपेण त्यजति । धूमकेतुः इव आकाशे महता वेगेन गच्छन् अन्यग्रहाणां दिशि धावयिष्यति ।

एतस्य अश्वस्य उपरि उपविष्टः कल्किः महाकारम् अतिदीर्घं तीक्ष्णं च खड्गं स्वीकृत्य दुष्टजनानां संहारार्थम् उद्यतः भविष्यति । प्रलयकालीनानां मेघखण्डानां मध्ये विलसन्त्या विद्युता निर्मितः एषः खड्गः आकाशात् भूमिपर्यन्तं स्वसामर्थ्यं प्रदर्शयन् दुष्टान् संहरिष्यति ।

अवतारपुरुषस्य कल्केः स्वरूपं योधस्य इव विशेषकवचेन आवृतं सत् प्रकाशमानं

भविष्यति। आपादमस्तकं कवचेन आवृतम् एतस्य शरीरं दुष्टानां कृते महाभयङ्करं दृश्यते। किन्तु शिष्टजनाः एतम् शरीरं सौन्दर्योपेतं पश्यन्ति।

विष्णोः अंशभूतः कल्किः विभिन्नदेशेषु विभिन्नरूपेण आत्मानं प्रदर्शयन् वेगेन सञ्चरिष्यति। अश्वस्य उपरि उपविश्य सञ्चरन् एषः अवतारस्य उद्देशं विनाश्रमं साधयिष्यति।

कल्केः आक्रमणेन कलिपुरुषस्य प्रभावः छिन्नविच्छिन्नः भविष्यति। तीक्ष्णया धारया युक्तः कल्केः खड्गः दुष्टान् नाशयन् अत्याचारिणः पापिनः च संहरन् शिष्टजनान् रक्षिष्यति।

पूर्वं ये ग्रहाः वक्रगतिम् आश्रितवन्तः आसन् ते इदानीं योग्यमार्गेण सञ्चरिष्यन्ति।

विष्णोः अंशभूतं कल्किं भूदेवी श्रद्धया नीराजनेन पूजयिष्यति। विविधैः स्तोत्रैः विष्णुं तोषयिष्यति च। तदा ब्रह्मादिदेवताः सप्तर्षयः च पुष्पवृष्टिं कुर्वन्तः स्तुतिं करिष्यन्ति।

कल्किः भूलोकस्य नियन्त्रणं स्वयं कुर्वन् अत्याचारान् अधर्मान् अन्यायान् च समूलं नाशयिष्यति। मानवसमाजे विद्यमानं भेदभावं उन्मूल्य सर्वत्र एकतां प्रसारयिष्यति। तदा च एषः महायुगः समाप्तिम् एष्यति। अपरस्य महायुगस्य शुभारम्भः भविष्यति। नवीनस्य कृतयुगस्य बीजारोपः भविष्यति च।

तदा विष्णुः स्वकल्किरूपं प्रतिस्वीकुर्वन् जगति सर्वत्र व्याप्तः भविष्यति। विश्वस्थितेः मूलरूपत्वेन स्थास्यति च।

विष्णुः नाम सर्वत्र सर्वदा व्याप्तः इत्यर्थः। कालः एव तस्य स्थितिः। महाशिवः एव तस्य परिपूर्णं स्वरूपम्। विष्णुः एव सर्वस्य आदिः, सः एव अन्तः अपि। जगतः जन्म तत्कारणतः एव, पालनपोषणम् अपि तेन एव, अन्त्यम् अपि तेन एव।

एवं प्रकारेण सूतमहर्षिः दशावतारकथासहितं विष्णुपुराणं समग्रतया निरूपितवान्।

(समाप्तम्)



# अन्तिमा इच्छा

योगधनः नाम कश्चित् धनिकः स्ववार्धक्ये अकस्मात् केनचित् विषमरोगेण पीडितः अभवत्। तस्य पत्नीपुत्रादयः न आसन्। तदीयः बन्धुः शुभदासः सर्वदा तस्य पार्श्वे एव तिष्ठति स्म यश्च उत्तराधिकारी भवितुम् अर्हः आसीत्।

कृष्णाचार्यः योगधनस्य चिकित्सां करोति स्म। एकदा सः योगधनं सम्यक् परीक्ष्य शुभदासं पृथक् आहूय उक्तवान्-"भवतः बन्धोः आरोग्यं विषमितम् अस्ति। इदानीं तु मूर्छावस्थायाम् अस्ति। यदि सः जागरितः भवति तर्हि एतत् गुलिकाद्वयं खादयतु। यदि दैवबलं स्यात् तर्हि सः उज्जीवेत्" इति।

वैद्यस्य गमनानन्तरं योगधनः नेत्रे उन्मीलितवान्। शुभदासं समीपे आहूय उक्तवान् च- "पुत्र, ऐश्वर्यसम्पादनं महते कष्टाय। किन्तु सम्पादितस्य रक्षणं ततोऽपि कष्टकरः" इति।

तदा शुभदासः चिन्तापूर्णस्वरेण उक्तवान्- "एतादृशः वार्तालापः किमर्थम्? यदि भवतः अन्तिमा इच्छा कापि स्यात्, तां वदतु। तस्याः पूरणं मम कर्तव्यम्" इति।

योगधनः क्षणं विचिन्त्य उक्तवान्- "वैद्यः कृष्णाचार्यः मां परीक्ष्य गुलिकाद्वयं दत्तवान् किल? तत् इदानीं मम मुखे स्थापयतु। एतदतिरिच्य किमन्यत् प्रार्थयामि?" इति।

एतत् श्रुत्वा शुभदासः स्तम्भितः जातः।





# धनस्यूतः

कस्मिंश्चित् ग्रामे अब्दुलरसूलनामकः युवकः आसीत्। सः निर्धनिकदम्पत्योः पुत्रः आसीत्। रसूलस्य पिता परिश्रमेण किञ्चित् सम्पादयन् कुटुम्बपोषणं करोति स्म।

रसूलः यदा षोडशवर्षीयः जातः तदा तस्य माता दिवङ्गता। अनन्तरं षण्मासाभ्यन्तरे तदीयः पिता अपि दिवङ्गतः।

मातापित्रोः मरणानन्तरं ग्रामे निवसितुं रसूलः न अपेक्षितवान्। एकाकिता अत्र तं बाधते स्म। अपि च महता परिश्रण कार्ये कृते अपि उदरम्भरणार्थं कष्टम् अनुभोक्तव्यम् आसीत् एव। सः श्रुतवान् आसीत् यत् दूरे नगरे परिश्रमेण यथेष्टं धनं प्राप्नुवन्ति इति। अतः सः चिन्तितवान्- 'यदि अहं नगरं गमिष्यामि तर्हि मम दैवम् अनुकूलकरं भवेत्' इति। अतः सः स्वग्रामं त्यक्त्वा नगरं गतवान्।

नगरे सः प्रसिद्धवणिजः गृहे कार्यं प्राप्तवान्। नगरस्य अनेकमार्गेषु तस्य वणिजः आपणाः आसन्। रसूलस्य कार्यं तु आपणात् आपणं प्रति वस्तूनां प्रापणम्।

रसूलः श्रद्धया परिश्रमेण च कार्यं करोति स्म। सम्पादिते धने सञ्चयः कथं करणीयः इति सः सदा चिन्तयति स्म। आहारे अपि सः मितव्ययं करोति स्म। विरामादिदिनेषु मनोरञ्जनार्थं व्ययं न करोति स्म। एवं तस्य जीवनं अतीव सरलम् आसीत्। प्रतिमासं रसूलः वेतनरूपेण यत् धनं प्राप्नोति, तत्र व्ययम् अतिरिच्य अवशिष्टं धनं सर्वं सः एकस्य धर्मगुरोः हस्ते समर्पयति स्म। एवं क्रमेण दशवर्षेषु सः गणनीयप्रमाणेन धनं सङ्गृहीतवान्। तदा तस्य मनसि एकः विचारः आगतः- ''मया किमर्थं वा ग्रामं गत्वा अल्पप्रमाणेन वाणिज्यम् न करणीयम्'' इति।

'अरेबिया कथा''

एवं चिन्तयित्वा सः धर्मगुरोः समीपं गतवान्। स्वकीयं विचारं निवेदितवान् च। धर्मगुरुः "भवान् कार्ये साफल्यं प्राप्नोतु" इति आशिषा अनुगृहीतवान्। तदीयं सञ्चितं धनं सर्वं प्रत्यर्पितवान् च।



रसूलः धनम् एकस्मिन् स्यूते स्थापयित्वा दृढं बद्ध्वा अपरस्मिन् दिने प्रातःकाले स्वग्रामं प्रति प्रस्थितः। मध्याह्नपर्यन्तं सः अविरतं गच्छन् एव आसीत्। यदा सूर्यातपस्य पीडा अधिका जाता तदा- 'इतःपरम् एतं धनस्यूतं स्वीकृत्य पादाभ्याम् एव अग्रे गन्तुं न शक्यते एव' इति भावना उत्पन्ना। किञ्चित् विश्रान्तिसुखम् अनुभोक्तव्यम् इति सः चिन्तितवान्। किन्तु मार्गस्य पार्श्वयोः केवलं खर्जूरवृक्षाः! छायासहितः एकः अपि विशालवृक्षः न दृश्यते। रसूलः खर्जूरवृक्षस्य अल्पच्छायायाम् एव उपविश्य स्वचर्मस्यूते विद्यमानं जलं पीतवान्।

तदा तेन एव मार्गेण आगच्छन्तं कञ्चित् अश्वारोहिणं सः दृष्टवान्। यदा अश्वारोही समीपम् आगतवान् तदा रसूलः पृष्टवान्- 'मित्र! भवान् कुत्र प्रस्थितः?' इति।

अश्वारोही अश्वं स्थगयन् उक्तवान्- "समीपे विद्यमानस्य ग्रामस्य मार्गेण मदीयं नगरं गमिष्यामि। अहं तस्मिन् नगरे उद्योगी अस्मि" इति।

अश्वारोहिणः एतत् उत्तरं श्रुत्वा रसूलः बहु सन्तुष्टः। सः सन्तोषेण उक्तवान्- "अहो! भाग्यम् एतत्। तस्मिन् ग्रामे विद्यमानस्य धर्मशालायाः स्वामी मम बन्धुः। भवान् एतं स्यूतं नीत्वा तस्य धर्मशालास्वामिनः हस्ते दातुं शक्नोति वा? यदि भवान् एवं करोति अहम् उपकृतः भविष्यामि। अहं सायङ्कालतः पूर्वं तत्र गत्वा एतं मम स्यूतं स्वीकरिष्यामि। एतं नेतुम् अहं कष्टम् अनुभवन् अस्मि" इति।

रसूलस्य वचनानि श्रुत्वा उच्चैः हसन् अश्वारोही उक्तवान्- "मित्र! स्यूतनिर्वहणे भवान् कष्टम् अनुभवति किल? यदि अहं तत् स्वीकरोमि तदा मम अश्वः अपि कष्टम् अनुभवति। भवान् अन्यथा न चिन्तयतु।

अहं भवदीयं कार्यं कर्तुं न शक्नोमि'' इति एवम् उक्त्वा सः ततः त्वरया गतवान् च ।

रसूलः निराशः । सः चिन्तितवान्- ''कीदृशाः जनाः भवन्ति लोके ? परोपकारस्य बुद्धिरेव नास्ति किल ? अल्पसाहाय्यं कृतं चेत् किं नश्यति एतेषाम् ?'' इति ।

अश्वारोही यदा किञ्चित् अग्रे गतवान् तदा तस्य मनसि एकः विचारः समुत्पन्नः- ''अहं तस्य पथिकस्य स्यूतम् अस्वीकुर्वन् मूर्खताम् आचरितवान् । कदाचित् तस्मिन् स्यूते अमूल्यवस्तूनि अपि भवेयुः । विनाश्रमं धनं सम्पादयितुम् एषः एव सदवकाशः । मां कः वा अवरोद्धुं शक्नोति'' इति । एवं चिन्तयित्वा सः रसूलसमीपं प्रस्थितः ।

एतस्मिन् एव समये रसूलस्य मनसि अपि विचारः उत्पन्नः- ''कीदृशः मूर्खः अहम् ! दशवर्षेषु परिश्रमेण यत् सम्पादितवान् तत्सर्वं अपरिचितस्य कस्यचित् हस्ते अविचार्य एव समर्पयितुम् उद्युक्तः ! यदि सः लोभवशंगतः धनं स्वीकृत्य पलायनं कुर्यात्, तर्हि अहं किं कर्तुं शक्नोमि ? इतोऽपि काश्चन घण्टाः यावत् अहं स्यूतं वोढुं न शक्नोमि ?'' इति ।

तावति काले अश्वारोही समीपम् आगत्य उक्तवान्-''मित्र ! भवतः प्रार्थनाविषये अहं पुनरपि चिन्तितवान् । 'भवतः उपकारः मम कर्तव्यम्' इति अहं निश्चितवान् । अतः स्यूतं ग्रामं प्रापयामि । ददातु तावत्'' इति ।

अश्वारोहिणः मनोभावं रसूलः ज्ञातवान् एव । 'मदीयं धनम् अपहर्तुम् एव एषः प्रत्यागतवान् अस्ति । अतः उपायेन एषः वञ्चकः निवारणीयः' इति चिन्तितवान् रसूलः ।

अतः सः मन्दहासं प्रकटयन् उक्तवान्- ''मित्रवर! भवतः गमनानन्तरं मया अपि विचारः कृतः । स्वयं स्यूतस्य नयनम् एव सर्वरीत्या अपि हितकरम् इति निश्चितं मया'' इति ।

उभौ अपि अपरस्य मनसि विद्यमानं भावं परस्परं ज्ञातवन्तौ । पुनश्च किं वक्तव्यम् ? अश्वारोही मौनं स्वमार्गे गतवान् ।



# महाबुद्धिमान्

शङ्करस्य वेङ्कटस्य च विश्वासः आसीत् यत् परस्परम् अहम् एव बुद्धिमान् इति। एतद्विषये तयोः मध्ये प्रतिदिनं विवादः प्रचलति स्म।

मार्गे गच्छन् विमलदासः कदाचित् एतयोः कलहं दृष्ट्वा उक्तवान्-"अहं भवन्तौ एकं प्रश्नं पृच्छामि। यः उत्तरं ददाति सः बुद्धिमान्। यदि उभौ अपि उत्तरदाने असमर्थौ तर्हि मम एव बुद्धिमत्ता भवद्भ्यम् अङ्गीकरणीया" इति।

"अहम् अस्यां स्पर्धायां भागं न निर्वहामि" इति उक्त्वा वेङ्कटः ततः निर्गतः।

"पश्यतु। भवतोः मध्ये वेङ्कटः एव बुद्धिमान्। मया अपि अज्ञातं प्रश्नम् अहं पृच्छेयम् इति चिन्तयन् सः इतः निर्गतः एव। प्रायः सः मम अभिप्रायं ज्ञातवान्" इति उक्तवान् विमलदासः।

अनन्तरं शङ्करः वेङ्कटस्य गृहं गत्वा प्रवृत्तं सर्वं निवेद्य उक्तवान्- "विमलदासः भवन्तम् एव बुद्धिमन्तं मन्यते" इति।

तदा वेङ्कटः आश्चर्यं प्रकटयन् उक्तवान्-"मित्र! तत्र अकस्मात् उदरवेदना उत्पन्ना। अतः अहं मध्ये एव मौनं ततः निर्गतः। किन्तु एतेन एव विमलदासः मां बुद्धिमन्तं मन्यते किल?" इति।

"एतादृशी उदरवेदना मां सर्वदा पीडयति। किन्तु वराकी सा उदरवेदना समये न आगच्छति। पश्यतु, भवतः गमनतः किञ्चित्पूर्वं सा उदरवेदना मां यदि पीडितवती स्यात् तर्हि विमलदासः माम् एव बुद्धिमन्तम् अचिन्तयिष्यत्" इति शङ्करः खेदं प्रकटितवान्।



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां मे-८५ मासे प्रकटयिष्यामः।





❀उपरितनं चित्रद्वयं पश्यन्तु। तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/ – रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः:-

चन्दमामा (संस्कृतम्)

७३/२' अक्षरम्', रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-'५६०००४

---

जनवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः-

प्रथमचित्रम्- पुत्रीवियुक्ता क्रन्दति विहङ्गमा ?

द्वितीयचित्रम्- पत्रिसमेता नन्दति वराङ्गना।

प्रेषकः- रङ्गस्वामी, सस्यशास्त्रविभागः, अण्णामलै विश्वविद्यालयः, अण्णामलैनगरम्-६०८००२

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, . Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अजगरः- | Big serpent | निर्वाणः- | Salvation |
| अभ्यागतः- | Guest | नीराजनम्- | Arati |
| आधिः- | Mortgage | परावर्त्य- | Having reversed |
| आपादमस्तकम्- | From head to toe | परिवीक्षणम- | Inspection |
| आसन्दः- | Chair | भागिनेयः- | Sister's son |
| उदरवेदना- | Stomachache | मक्षिका- | Fly |
| उपहासः- | Ridicule | मातुलानी- | Aunt |
| उपायनम्- | Gift | मार्दवः- | Softness |
| कन्दरः- | Valley | लाला- | Saliva |
| कवलः- | Gargle | वल्कलम्- | Bark garment |
| कीलयित्वा- | Having locked | वाटिका- | Garden |
| कुञ्चिका- | Key | विद्युत्- | Lightning |
| कौमुदी- | Moonlight | वृद्धिः- | Interest |
| खुरः- | Hoof | शर्करा- | Sugar |
| गुलिका- | Tablet | शुनकः- | Dog |
| घृतम्- | Ghee | समीकृत्य - | Having repaired |
| तक्रम्- | Buttermilk | सारः- | Soup |
| तण्डुलः- | Grain of rice | सोढ्वा- | Having borne |
| तायकम्- | Talisman | स्कन्धः- | Shoulder |
| तिर्यक्- | Across | स्यूतः- | Bag |
| धूमकेतुः- | Comet | हस्ताङ्कनम्- | Signature. |

# शालागमनम्

| | |
|---|---|
| उमेश:- भवत: इतिहासस्य टिप्पणीं ददाति वा ? | Umesh: Will you please lend me your history notes? |
| राकेश:- ह्य: एव गिरीश: स्वीकृतवान् ।- | Rakesh: Girish took them just yesterday. |
| उ- रसायनशास्त्रस्य टिप्पणी अस्ति वा ? | Do you have the Chemistry notes? |
| रा- तत् अस्ति, किन्तु मया अपि पठनीयं किल ? | Yes, I have but I too have to read them. |
| उ- दिनद्वयाभ्यन्तरे प्रत्यर्पयामि भो: । | I will return them in two days! |
| रा- न भो:, अस्मिन् विरामे अवश्यं पठनीयम् इति मया पूर्वम् एव निश्चितम् । | No, I am sorry. I have decided to go through them during these holidays. |
| उ- तर्हि सप्ताहानन्तरं ददातु । | All right then, give them to me after a week. |
| रा- तथा चेत् अस्तु, भवत: अभ्यास: कथं प्रचलति ? | Sure, that is no problem. How are your preperations progressing? |
| उ- अद्यावधि किमपि न पठितवान् एव । | I haven't studied anything so far. |
| रा- असत्यं वदति भवान् । | That is a lie. |
| उ- नैव भो:, इत: परम् अभ्यासस्य आरम्भ: करणीय: । भवत: कथम् ? गाढम् अभ्यास: किल ? | Not at all. I have to start from now on. How about yours? Thoroughly prepared, I am sure. |
| रा- अभ्यास: तु प्रचलति, किन्तु किं प्रयोजनम् ? दशवारं पठामि चेदपि न स्मरामि । | Preperations are there of course, but what is the use? I don't remember things even if I read them for ten weeks! |
| उ- शालायां पाठ्यभाग: समापित: वा ? | Have they completed all the portions in the school? |
| रा- न भो:, भौतशास्त्रस्य अध्यायद्वयम् अवशिष्टम् । गणितस्य तु केवलम् अर्धभाग: समापित: । | No, there are still two more chapters in physics. Only half the portion in Maths are over. |
| उ- अस्माकं शालायां पाठ्यभाग: समाप्तप्राय: । पुनरावृत्ति: प्रचलति । | In our school they have almost been finished. We are now in the process of revision. |
| रा- भवन्त: एव भाग्यशालिन: । अस्तु, आगामिसप्ताहे पुन: मेलिष्याम: । | You're lucky. Okay, we'll meet again next week. |

# प्राचीन-भारतस्य भव्यता तथा तेजस्विता




**चन्दमामायाः** लोकप्रियतायाः एकमात्रं प्रमाणं यत् प्रतिमासम् एतां १,२०,००,००० बालकाः पठन्ति ।

# चन्दमामायां

**चन्दमामायाः** प्रसारसंङ्ख्या सामान्यतः ८,००,००० अस्ति या प्रतिमासं भारतस्य तथा पूर्वएशियादेशानां कुटुम्बान्, पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

प्रत्येकमासस्य कथासु दर्शितम् अस्ति ।

भारतस्य सर्वाधिक प्रसारयुता बालानां मासिकी ।